শ্রীশ্রীজয়তি।

৫৩.
৫

# বিজ্ঞাপন।

—

কচন্দ্রিকা অতি প্রাচীনগ্রন্থ, দত্তক সম্বন্ধে যাহা কিছু জানিবার আছে, সে সমস্তই এই গ্রন্থে প্রাপ্ত হওয়া যায়। কিন্তু নেক স্থান টীকার সাহায্য ব্যতীত সাধারণের দুর্বোধ্য। ন্থের আরও দুইটী টীকা আছে, আমাদের দুর্ভাগ্যবশতঃ অনেক কঠিন স্থানের অর্থ পরিত্যাগ করা হইয়াছে। সুতরাং সাধারণের বিশেষ উপকার হইতেছে না। আমি সে সমুদয় ব্যাখ্যা করিতে বিশেষরূপ চেষ্টা করিয়াছি। কিন্তু কতদূর্ য হইয়াছি জানিনা। এক্ষণে প্রাজ্ঞগণের নিকট এই প্রার্থনা াতে কোন দোষদৃষ্ট হইলে অনুগ্রহ পূর্ব্বক আমাকে বেন। তাহা হইলে দ্বিতীয় সংস্করণের সময় অনেক সংশোধন পারিব। আমি পূজ্যপাদ মহামহোপাধ্যায় শ্রীল কৃষ্ণনাথ ানন মহাশয়ের নিকট স্মৃতি শাস্ত্র অধ্যয়ন পূর্ব্বক উপাধি হইয়াছি। পূর্ব্বে একটী বিজ্ঞাপন দিয়াছিলাম যে ইহার টাকা হইবে, কিন্তু তাহাতে ছাত্রবর্গের অসুবিধা বিবেচনায় ৵০ দশ আনা স্থির করিলাম, কিন্তু একত্র ৫ খানা লইলে াকায় দিব, সর্ব্বত্র ডাকমাশুলাদি পৃথক্ লাগিবে, কিমধিক

লনা জিলান্তঃপাতিসাংদিয়াগ্রামনিবাসি—

শ্রীললিতমোহন শর্ম্মা।



# सूचीपत्रम् ।

## शुद्धिपत्रम् ।

| अशुद्धिः | शुद्धिः | पृष्ठा |
| --- | --- | --- |
| पदम् | पदम् | १ |
| करत्या | करत्ता | ८ |
| पुत्री | पुत्र | १० |
| पुत्रस्य | पुत्तस्य | १० |
| मितिनं | मिति | १४ |
| यज्ञीये | यज्ञी | १४ |
| विधिना | विधाना | १५ |
| पर | परे | १५ |
| इवेति | इव इति | २३ |
| संस्कारणे | संस्कारकरणे | २६ |
| करकरणे | करणे | २६ |
| पिण्डाद्या: | पिवाद्या: | ३१ |
| जीवीति | जीवति | ३१ |
| भाव्ये | भाव्ये | ४१ |
| भाज्या | राज्या | ४५ |
| निपेध | निषेध | ४६ |
| विक्या | रिक्था | ४७ |

# दत्तकचन्द्रिका ।

चन्द्रिकानुक्तसञ्जात संशयध्वान्तचन्द्रिका ।
अपुत्रस्य चन्द्रिकालानुभावेन कृता दत्तकचन्द्रिका ॥ १ ॥

ओं नमो गणेशाय

यद्वाणीरसनाग्रगा कविकुलस्तोत्रा नटी नृत्यते
या नाट्योल्लिखिता रसध्वनियुताऽलङ्कारशोभोज्ज्वला ।
मह्यं यच्छतु सा कटाक्षममलं दुःखाम्बुधौ भ्राम्यते
याचेऽन्यत् किमु मे करस्य वशगा जाड्यं नयत्वाचरम् ॥
जगदागमने हेतुं महेशं पितरं मुहुः ।
करोति लखितो नत्वा टीकां दत्तकबोधिनीम् ॥

ग्रन्थसमाप्तिप्रतिबन्धकस्वरूपविघ्नपुञ्जविनाशाय महादेवनमस्काररूपं मङ्गलमाचरन् ग्रन्थकृदभिधेयादिकं निर्दिशति चन्द्रिकेत्यादि। अत्राभिधेयं दत्तककरणं प्रयोजनं दत्तकविषयकसंशयापनोदनं; सम्बन्धश्च दत्तकरणेन सह ग्रन्थस्य ज्ञाप्यज्ञापकभावः । तथाचोक्तं "ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । ग्रन्थादौ तेन वक्तव्यः सम्बन्धः स प्रयोजनः" इति। ज्ञातावर्थौ अभिधेयप्रयोजने यस्य तत् ज्ञातार्थं ज्ञाताभिधेयप्रयोजनकं ; ज्ञातः सम्बन्धो यस्य तत् ज्ञातसम्बन्धं ; एतेनाभिधेयप्रयोजनसम्बन्धानां लाभः। श्लोकार्थस्तु, चन्द्रिका स्मृतिचन्द्रिका ; तस्यामनुक्तेनानभिधानेन सञ्जात उत्पन्नो यः संशयः। कदा केन कथं कीदृशो दत्तकः ग्राह्यः इत्येवंरूपः स एव ध्वान्तः अन्धकारः तत्र चन्द्रिकाकौमुदीव तदपसारिणी दत्तकचन्द्रिका एतन्नामकग्रन्थः, चन्द्रो विद्यतेऽस्य चन्द्री स चासौ कालश्चेति चन्द्रिकालः महादेवः, तमनुभवति अनुचिन्तयतीति चन्द्रिकालानुभावः ; महादेवानुचिन्तकः। "कर्म्मण्यण्"इत्यणा अनुभाव इति पदम्। कालशब्देनात्र महादेवो लभ्यते तथा च मेदिनी "कालो मृत्यौ महाकाले समये यमकृष्णयोः"इति। तेन कुवेरेण मया कृता कर्त्तुमारब्धा, स्मृतिचन्द्रिकायाः कुवेरप्रणीतत्वादस्यापि तत्प्रणीतत्वमिति ॥ १ ॥

मन्वादिवाक्यविहृतेषु विवादमार्गे
ष्वष्टादशस्वपि मया स्मृति चन्द्रिकायाम्।
कल्युक्तदत्तकविधिर्न विवेचितो यः
सर्वः स चात्र विततो विहृतो विशेषात्॥ २॥

मन्वादीति। मन्वादीनां मनुयाज्ञवल्क्यप्रभृतीनां वाक्यैः "तेषामाद्यमृणादानमित्यादिवचनैः विहृतेषु व्यक्तेषु अष्टादशसु मध्ये मया स्मृतिचन्द्रिकायां विवादमार्गेषु विवादपदेषु च "अत्रापिशब्दार्थः" यः कल्युक्तदत्तकविधिर्न विवेचितः न निरूपितः, अत्र ग्रन्थे स सर्वः विततः विस्तृतरूप इत्यर्थः, विशेषात् विशेषेण विहृतः निरूपयितुमारब्धः। यद्यपि द्वादशविधा गौणपुत्राः सम्भवन्ति तथापि "अनेकधाः कृताः पुत्रा ऋषिभिर्यैः पुरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैरिति वृहस्पत्युक्तेः, तथा "दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रह इति कालिकापुराणवचनाच्च कलौ दत्तकेतरगौणपुत्रासम्भवात् सुष्ठूक्तं कल्युक्तदत्तकविधिरिति॥ २॥

तत्राह मनुः। अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नाम सङ्कीर्त्तनाय च॥ अत्रिश्च। अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः॥ अपुत्रेण अजातपुत्रेण मृतपुत्रेण वा। अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य चेति शौनकसंवादात्। तेन पुत्रोत्पत्त्या ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः। पितृणामनृणश्चैव स तस्माल्लब्धमर्हतीति मनुवचनावगत ऋणपरिहारेऽपि तत्पुत्रमरणे पिण्डोदकाद्यर्थं पुनः पुत्रकरणमावश्यकम्॥ ३॥

तत्रेति। दत्तककरणविषये इत्यर्थः। अपुत्रेण पुत्रपौत्रप्रपौत्ररहितेन यादृक् तादृक् सुतः द्वादशविधानां गौणपुत्राणामन्यतमः पिण्डोदकक्रियाहेतोर्नाम सङ्कीर्त्तनाय च प्रयत्नतः कार्य्यः। अत्र चकारः समुच्चयार्थकस्तेन नामसङ्कीर्त्तनमात्रार्थमपि गौणपुत्रः कर्त्तव्य; इति। एतदग्रे स्फुटी भविष्यति॥ द्वादशविधगौणपुत्रास्तु, पुत्रिकाचेत्र-

जकानीनगूढ़ोत्पन्नापविद्धसहोढ़पौनर्भवदत्तकस्वयमुपागतकृतकक्रीतपारशवाः। तथाच बृहस्पतिः। आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना॥ तथा स एव। पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः। सन्तानकारणन्तेषामौरसः पुत्रिका तथा॥ अतएव पुत्रत्वन्तु त्रयोदशानामविकलमेवेति मिश्राः॥ शुद्धिविवेकोऽप्येवम्॥ एतेन गौणपुत्राणामेकादशविधत्वोक्तिर्निरस्ता। अत्र मनुविष्णुवशिष्ठैः स्वयं दत्तश्च शौद्रश्चेति, यत्र क्वचनोत्पादितस्तु द्वादशेति शूद्रापुत्र एव षष्ठो भवतीत्येतैर्वचनैः शूद्रापुत्रस्य पारशवस्यापि गणनात् यन्मुन्यन्तरैः पुत्रगणनायां शूद्रापुत्रोनान्तर्भावितस्तदत्यन्तापकृष्टत्वादिति बोध्यम्॥ तदस्तु प्रकृतमनुसरामः। तेनेति। मृतपुत्रस्याऽपि पुत्रीकरणस्यावश्यकत्वेन, पुनः पुत्रकरणमावश्यकमित्यभिधानान्वयः॥ जातमात्रेण प्रसूतमात्रेणेत्यर्थः। पुत्रीभवति पुन्नामनरकत्राणकर्तृपुत्रवान् भवति। तथा च, ऋणमस्मिन् सन्नयति अमृतत्वञ्च विन्दति। पिता पुत्रस्य जातस्य पश्येच्च जीवतो मुखम्। पुन्नाम्नो नरकात् यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवेति॥ ननु पितृऋणमोचन पुन्नामनरकत्राणयोः सम्पत्त्या मृतपुत्रकस्य पुनः पुत्रीकरणमनावश्यकमिति चेन्न, पिण्डोदकनामसङ्कीर्त्तनार्थमस्यावश्यकत्वादिति॥ ३॥

अत्र पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम्। तयोरपि पिण्डदातृत्ववंशकरत्वाविशेषात् अन्यथा सत्यपि पौत्रे मृतपुत्रस्य निर्निमित्तपुत्रपरिग्रहापत्तेः; अतः पुत्रपौत्रप्रपौत्ररहितस्यैव पुत्रीकरणमवगम्यते। अपुत्रेणेत्यत्र पुंस्त्वैकत्वयोर्विधेयविशेषणतया विवक्षितत्वं तेन द्वाभ्यां स्त्रियावानेकः प्रतिग्राह्य इति तु न देश्यम्। द्व्यामुष्यायणस्य द्वाभ्यां परिग्रहस्य वक्ष्यमाणत्वात् स्त्रियाश्च भर्त्तुरनुज्ञया तदधिकारात्। तथा च वशिष्ठः। न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्त्तुः॥ ४॥

अत्रेति। मन्वादिवचने इत्यर्थः। निर्निमित्तेति, पिण्डोदकदानादेः पौत्रादिनैव सम्भाव्यमानत्वात् पुत्रपरिग्रहे निमित्ताभावादित्यर्थः। अत्र विधिवाक्यस्थापुत्रपदस्य विधेयत्वेन तद्विशेषणीभूतयोः पुंस्त्वैकत्वयोर्विधेयविशेषणत्वेन विवक्षितत्वमेव मत्वा एके-

नैव पुंसा पुत्री ग्राह्य इति ये मन्यन्ते तन्मतं दूषयति अपुत्रेणेत्यादि। तेनेति, पुंस्त्वै-कत्वयोर्विवक्षितत्वेन न देयं, न उपदेश्यमित्यर्थः। अत्र हेतुमाह द्व्यामुष्यायणस्येत्यादि, द्वाभ्यां नैकः प्रतिग्राह्य इति तु न देश्यमित्यत्र द्व्यामुष्यायणस्य द्वाभ्यां परिग्रहस्य वक्ष्य-माणत्वादिति हेतुः, स्त्रिया न प्रतिग्राह्य इति तु न देश्यमित्यत्र स्त्रियाश्च भर्त्तुरित्या-दिकम् हेतुः। स्त्रिया भर्त्तनुमत्या दत्तकपुत्रग्रहणाधिकारे प्रमाणमाह वशिष्ठ इति॥ न स्त्रीपुत्रमिति। तथाचात्रैव वचने भर्त्तुरनुज्ञया स्त्रिया परिग्रहदर्शनात् पुंस्त्वस्य विवक्षितत्वेऽपि स्त्रीकर्त्तृकग्रहणं नानुपपन्नमिति भावः॥ ४॥

प्रतिनिधिरिति। स च क्षेत्रजादिरेकादशविधः। यथा मनुः। क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥ वृहस्पतिः। पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः। सन्तानकारणन्तेषामौरसः पुत्रिका तथा॥ आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादशपुत्रास्तु पुत्रिकौ-रसयोर्विना॥ तथापि कलौ न सर्वेषामभ्यनुज्ञानम्। अनेकधाः कृताः पुत्रा ऋषिभिर्यैः पुरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्ति-हीनैरिदन्तनैरिति वचनात्॥ दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रह इत्यादीनभिधाय इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिण इति दत्तकेतरप्रतिनिधिनिषेधात् अतो दत्तकविधिर्विविच्यते॥ ५॥

अविवचनोक्तं प्रतिनिधिपदं विवृणोति प्रतिनिधिरिति॥ एकादशविधगौण-पुत्रविषये प्रमाणमुपन्यस्यति यथा मनुरिति। ननु कथं गौणपुत्राणामेकादशविधत्व-मुच्यते; पुत्रास्त्रयोदशप्रोक्ता मनुना येऽनुपूर्वशः इति वृहस्पतिवचनेन मुख्यौरसेतर-द्वादशविधगौणपुत्राणामेव मन्वभिमतत्वस्य भावादिति चेन्न पुत्रिकाया औरसतुल्यत्वेन ईषदपकर्षेऽपि तस्याः क्षेत्रजादिवत् प्रतिनिधित्वमनङ्गीकृत्य एकादशानामेव प्रति-निधित्वाभिधानात्॥ सन्तानकारणं स्वोत्पादितस्वक्षेत्रजातवंशधारा प्रवर्त्तकम्। तेषां त्रयोदशपुत्राणां मध्ये औरसः सन्तानकारणं; मुख्यसन्ततिकरमित्यर्थः, अत्र तथेत्यनेन गौणपुत्राणां मध्ये पुत्रिकायाः प्राधान्यं प्रकटितम्। तथापीति, औरसातिरिक्तानां बहूनां प्रतिनिधित्वेऽपि, सर्वेषां दत्तकेतरेषां प्रतिनिधिपुत्राणामित्यर्थः। वृहस्पत्या-

दित्यपुराणाभ्यां प्रमापयति अनेकधेत्यादि, दत्तौरसेत्यादि च। पुत्राः कृताः अपुत्रा अपि पुत्रत्वं प्रापिताः अधुना कलौ इदन्तनैरन्नृषिभिः ॥ ५ ॥

अत्र शौनकः। ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः। तदभावेऽसपिण्डे वा अन्यत्र तु नकारयेत् ॥ असपिण्डे इति सामान्यश्रवणात् समानासमानगोत्रेष्वित्यर्थः। तथा च सपिण्डाभावेऽसपिण्डः सगोत्रस्तदभावे भिन्नगोत्रोऽपि ग्राह्य इत्याह शाकलः॥ सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा। अपुत्रको द्विजो यस्मात् पुत्रत्वे परिकल्पयेत् ॥ समानगोत्रजाभावे पालयेदन्यगोत्रजम्। दौहित्रं भागिनेयञ्च मातृस्वसृसुतं विना इति। अन्यत्र तु नकारयेदिति ब्राह्मणातिरिक्तः क्षत्रियादिरसमानजातीयो दत्तको व्यावर्त्त्यते ॥ ६ ॥

अत्रेति। दत्तकग्रहणविषये इत्यर्थः। शौनक आह इति शेषः। अत्र ब्राह्मणानामित्यनेन क्षत्रियादीनामपि संग्रहः। इत्यादि बहुवचनान्ता गणस्य संसूचका इत्युक्तिः। असपिण्ड इति सामान्यश्रवणादिति। शौनकवचने तदभावेऽसपिण्डे वेति सामान्यश्रवणादित्यर्थः। समानासमानगोत्रेष्विति। असपिण्डपदात् सपिण्डभिन्नत्वेन सकुल्यादिसमानगोत्रस्यासमानगोत्रस्य च प्राप्तिः॥ केचित्तु अत्र सपिण्डेष्विति सामान्यश्रवणादिति पठन्ति असमानगोत्रः मातामहकुलीनः इति व्याचक्षते च। तेषामयमाशयः। तथाचात्र एकपिण्डसम्बन्धवत्त्वेन एकशरीरावयववत्त्वेन च सापिण्ड्यं विवक्षितम्। तदसत् परत्र एतद्ग्रन्थकृता मातामहकुलीनसपिण्डस्यानुल्लेखात्, तथाच सपिण्डाभावेऽसपिण्डः सगोत्रस्तदभावे भिन्नगोत्रोऽपि ग्राह्य इति सामान्यत उक्तत्वाच्च॥ असपिण्डपदेन समानासमानगोत्रयोः प्राप्तौ साधकमाह शाकल इति। सगोत्रजपदमसपिण्डसगोत्रजपरम्। एतेनासपिण्डपदस्य समानगोत्राऽसपिण्डपरत्वं लब्धम्। पालयेदन्यगोत्रजमिति; एतेन शौनकवचनोक्तासपिण्डपदस्य असमानगोत्रपरत्वमपि सिद्धम्। असपिण्डपदस्य समानासमानगोत्रपरत्वादसमानगोत्रत्वेन सजातीयवद्द्विजातीयस्यापि पुत्रत्वप्राप्त्या तन्निराकरोति अन्यत्र तु नकारयेदिति ॥ ६ ॥

यदाह मनुः । माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं सज्ञेयो दत्त्रिमः सुतः ॥ आपदि पुत्रप्रतिग्रहीतुरपुत्रत्वे, सदृशं सजातीयम् । यत्तु सदृशं न जातितः किन्तु कुलानुरूपैर्गुणैस्तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्रो युज्यते इति मेधातिथिव्याख्यानम् । तत्रायमभिसन्धिः, औरसासत्त्वे क्षत्रियादेरसमानजातीयतया पिण्डोदकाद्यनर्हत्वेऽपि नामसङ्कीर्त्तनादिप्रयोजनकतया पुत्रत्वमुत्पद्यत एव शास्त्रीयत्वात् परन्त्वल्पोपकारकतया ग्रासाच्छादनभागिन इति । तथा शौनकः । यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित् । अंशभाजं न तं कुर्य्यात् शौनकस्य मतं हि तत् । याज्ञवल्क्येनाऽपि । सजातीयस्य पिण्डदातृत्वांशहरत्वे विहिते न तु विजातीयस्य पुत्रत्वं निषिद्धम् ॥ ७ ॥

अन्यगोत्रजपदेन भिन्नजातीयासपिण्डस्यापि प्राप्तिः स्यादित्यतस्तन्निराकरोति मनुरिति । पुत्रपरिग्रहीतुर्दत्तकग्रहीतुरित्यर्थः । सदृशपदस्य सजातीयार्थकत्वे कुलानुरूपैर्गुणैरिति मेधातिथिव्याख्यानेन सह विरोधः स्यादित्यतस्तत्परिहारायाह यत्त्विति ॥ मेधातिथेरभिप्रायं व्यनक्ति तत्रायमभिसन्धिरिति । पिण्डोदकाद्यनर्हत्वेऽपि ; पिण्डोदकदानाद्ययोग्यत्वेऽपि ; पिण्डोदकादिदाने पुत्रादिसजातीयपर्य्यन्तस्यैवाधिकारादिति भावः । अतएवैतदभिप्रायकं विष्णुपुराणवचनम् । ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन । कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितामियादिति । न करोति पिण्डोदकादिदानमिति शेषः ॥ क्षत्रियादेरप्यविशेषादत्र ब्राह्मण इत्युपलक्षणम् । नामसङ्कीर्त्तनेति । असमानजातीयदत्तकस्याऽपि अमुकसन्तानत्वेन कीर्त्तनादिति भावः । अल्पेति ; नामसंकीर्त्तनाद्यल्पोपकारकत्वेनेत्यर्थः । अल्पोपकारकत्वेन धनाधिकारानर्हत्वं दर्शयति ॥ यदि स्यादिति । अतांशभाजं न तं कुर्य्यादित्यनेनासवर्णदत्तकस्यांशभागित्वनिषेधात् श्राद्धकरणानर्हत्वेन अल्पोपकारकत्वं प्रतीयते । पिण्डदातृत्वेत्यादि । सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः, पिण्डदोऽंशहरश्चैषामिति वचनाभ्यामिति शेषः । सजातीयेष्वयं प्रोक्त इत्यनेन असवर्णदत्तकग्रहणं प्रतीयते अन्यथा सजातीयेष्वित्यभिधानमनर्थकं स्यात्, तस्य सामान्यत एव प्राप्तत्वादिति ॥ ७ ॥

व्यक्तमाह वृद्धयाज्ञवल्क्यः। सजातीयः सुतः ग्राह्यः पिण्डदाता स ऋक्थभाक्। तदभावे विजातीयो वंशमात्रकरः स्मृतः। ग्रासाच्छादनमात्रन्तु स लभेत तदृक्थित इति। वस्तुतस्तु मनुवचने सदृशपदस्य सजातीयार्थकतैव युक्ता, परत्र तादृशदत्तकस्य विभागदर्शनात् असवर्णस्य च विभागासम्भवात्। दौहित्रो भागिनेयश्चेति दौहित्रभागिनेयनिषेधः शूद्रातिरिक्तविषयः॥ तथा च शौनकः। क्षत्रियाणां सजातौ च गुरुगोत्रसमेऽपि वा। वैश्यानां वैश्यजातिषु शूद्राणां शूद्रजातिषु। सर्वेषामेव वर्णानां जातिष्वेव न चान्यतः। दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः। ब्राह्मणादित्रये नास्ति भागिनेयसुतः क्वचित्। गुरुगोत्रसमेऽपि वेति क्षत्रियाणां प्रातिस्विकगोत्राभावात् गुरुगोत्रनिर्देशः। पौरोहित्यान् राजन्यविशोः प्रवृणीतेति सूत्रेण तस्य पुरोहितगोत्रभागित्वोक्तेः। जातिष्वेव न चान्यत इति नियमः सजातीयसम्भवे विजातीयनिषेधार्थः, अन्यथा प्रागुक्तकात्यायनविरोधः स्यात्॥ ८॥

विजातीय पुत्रग्रहणे साक्षात्प्रमाणमुपन्यस्यति व्यक्तमाहेति। अत्र तदभावे विजातीय इत्यनेन विजातीयपुत्रग्रहणं स्फुटमवगम्यते। विजातीयग्रहणन्तु कलीतरपरं, कलौ विजातीयविवाहनिषेधाद्विजातीयमुख्यपुत्रनिषेधेन गौणपुत्रनिषेधः सुतरामवगम्यते। मेधातिथिव्याख्याने अक्षरसादाह वस्तुतस्त्विति। स चाक्षरसः अनुपदं व्यक्तो भविष्यति॥ मनुवचने माता पिता वा दद्यातामित्यादिवचने परत्रेति। परस्मिन् वचने मनोरिति शेषः। मनुवचनन्तु श्रेयसः श्रेयसोऽभावे यवीयान् ऋक्थमर्हति। बहवश्चेत्तु सदृशाः सर्व्वे ऋक्थस्य भागिनः इति। बहवः दत्तकादयः। अत्र केचित् युक्ता परत्र इत्यत्र अकारप्रश्लेषेण अपरत्र अपरस्मिन् धनाधिकारविधायकवचने इत्यर्थः। अन्यथा अधिकारनिर्णायकवचनस्य लक्षणनिर्णायकवचनात् प्राङ्निर्दिष्टत्वेन परत्र इत्यसङ्गतेः। वचनन्तु "उपपन्नो गुणैः सर्व्वैः पुत्रो यस्य तु दत्त्रिमः। स हरेतैव तदृक्थं सम्प्राप्तोऽप्यन्यगोत्रत" इत्याहुस्तच्चिन्त्यं परत्र "श्रेयसः श्रेयसोऽभावे" इति वचनस्य विद्यमानत्वात्, न च तद्वचनस्य केवलदत्तकविषयत्वाभावादप्रामाण्यमिति वाच्यं, बहवश्चेत्त्वित्यनेन

स्त्रीकृतदत्तकादिनिखिलपुत्रविषयत्वेन दत्तकपुत्रविषयत्वस्यापि स्फुटत्वात्। यच्चात्र दत्तकपदघटितस्पष्टत्वेन उपपन्नो गुणैः सर्व्वैरिति वचनमभिहितं, तदपि चिन्त्यं तत्र सजातीयत्वबोधकपदादर्शनात्, यत्तु गुणैः सर्व्वैरिति पदं तस्य सजातीयत्वबोधकतायां प्रमाणाभावात्॥ दौहित्र इति; तथा च प्रतिषिद्धपुत्रेषु मध्ये दौहित्रो भागिनेयश्च शूद्रैः पुत्रः क्रियते नान्यत्र वचनाभावादिति। प्रातिस्विकगोत्राभावादिति। तत्त-द्व्यक्तिनियतगोत्राभावादित्यर्थः। "जमदग्निर्भरद्वाजविश्वामित्रात्रिगौतमाः। वशिष्ठकाश्य-पागस्त्यामुनयो गोत्रकारिणः। एतेषां यान्य पत्यानि तानि गोत्राणि मन्वते" इति स्मृतेः। गोत्रस्यादिपुरुषब्राह्मणरूपतया क्षत्रियादेरादिपुरुषस्य ब्राह्मणरूपत्वासम्भवा-दिति भावः॥ गुरुगोत्रनिर्देशः, गुरोः पुरोहितस्य गोत्रनिर्देशः॥ अन्यथेति। जाति-ष्वेवेत्यनेन विजातीयदत्तकग्रहणास्वीकारे इत्यर्थः। प्रागुक्तेति, तथाच प्रागुक्तवचन-कात्यायनवचनयोर्विरोधः स्यादित्यर्थः। प्रागुक्तवचनन्तु "यदि स्यादन्यजातीयो गृहीतो-ऽपि सुतः क्वचित्। अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हि तदिति शौनकोक्तं, कात्या-यनवचनन्तु "असवर्णास्तु ग्रासाच्छादनभागिन" इति। अत्र केचित् प्रागुक्तपदं कात्या-यनवचनस्य विशेषणं न तु पृथगिति मत्वा प्रागुक्तकात्यायनवचनत्वेनासवर्णास्तु ग्रासा-च्छादनभागिन इति वचनमाहुस्तदतिमन्दं प्राक् तादृशकात्यायणवचनाभावात्॥ ८॥

तत्रापि सन्निहितसपिण्डेषु सति भ्रातृसुते स एव पुत्त्रीकार्य्य इत्याह मनुः। सर्व्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत् सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्। बृहस्पतिः। यद्येकजाता बहवो भ्रातरश्च सहोदराः। एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः इति। अत्र वचनद्वयेऽपि भ्रातृसुते च पुत्रप्रतिनिधितया कथञ्चित् सम्भवति अन्यो न प्रतिनिधिः कार्य्य इत्यवगम्यते। न चापत्यमुत्-पादयितव्यमिति नित्यो ह्ययं विधिः स यथाकथञ्चित् पालनीय-स्तत्र भ्रातृव्ये पुत्रातिदेशेन तत्फलस्य पिण्डोदकादेरलोकतापरी-हारस्य च सिद्धत्वेन न पुनस्तत्र प्रवृत्तिरतएवाक्तस्यैव भ्रातृपुत्रस्य पुत्रत्वम्। अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत्। स एव तस्य कुर्व्वीतश्राद्धपिण्डोदकक्रियामिति बृहत्पराशरस्मरणात्।

तस्मिन् सति तु न दत्तकाद्युपादानमिति वाच्यम्। भ्रातृव्यस्य पुत्रातिदेशेनालोकतापरीहारादिसाधकत्वेऽपि नामसंकीर्त्तनोचितवंशकरत्वानुपपत्त्या तदर्थं तदुपादानस्यावश्यकत्वात्। किञ्च इदं हि वचनद्वयं सति भ्रातृपुत्रे न दत्तकाद्युपादाननिषेधकं परन्तु श्राद्धादिकर्त्तृत्वरूपपुत्रधर्म्मातिदेशकं, अन्यथा सत्यपि भ्रातृपुत्रे क्षेत्रजपुत्रोत्पादनविधिविरोधापत्तेः। अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम्। पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति वचने दौहित्रेऽपि पौत्रातिदेशसत्वात् दौहित्रसत्त्वेऽपि प्रागुक्तयुक्त्या दत्तकाद्यनुपादानप्रसङ्गाच्च ॥ ९ ॥

तत्रापीति। सपिण्डादिष्वित्यर्थः। सति भ्रातृसुत इति। ग्रहणयोग्य इति शेषः। पुत्रीकार्य्यः; दत्तकपुत्रत्वेन ग्रहीतव्यः॥ वचनद्वयेऽपीति। मनुबृहस्पत्योरिति शेषः। अन्यः सपिण्डादिरित्यर्थः। भ्रातृपुत्रस्य स्वत एव पुत्रकार्य्यकारित्वेन पुत्रत्वातिदेशेन चागृहीतस्याऽपि भ्रातृपुत्रस्य पुत्रप्रतिनिधित्वं सिद्धमिति केषाञ्चिन्मतमुत्तोल्य दूषयति न चेति। यथाकथञ्चिदिति; औरसोत्पादनेन दत्तकग्रहणादिना चेत्यर्थः। अलोकतेत्यादीति, पुत्रेण लोकान् जयतीत्युक्तलोकविशेषानवाप्तिपरिहारस्येत्यर्थः। तत्रेति; यथाविधिदत्तकग्रहणे इत्यर्थः॥ अतएवेति। अगृहीत भ्रातृपुत्रेणापि पुत्रप्रतिनिधित्वसम्भवादेवेत्यर्थः॥ अकृतस्यैव अगृहीतस्यैव पुत्रत्वं पुत्रप्रतिनिधित्वं तत् पुत्र इति। भ्रातृजः भ्रातृपुत्रस्तत्पुत्रः पितृव्यपुत्रः भवेत्। नामसंकीर्त्तनेत्यादीति; अयमेतद्वंशोद्भव इत्येवंरूपवंशकरत्वानुपपत्त्या इत्यर्थः। तदुपादानस्येति। यथाविधिदत्तकग्रहणस्येत्यर्थः। ननु अगृहीतभ्रातृपुत्रेण पारलौकिकमुख्योपकारनिचयस्य सिद्धत्वेन गौणवंशकीर्त्तनरूपप्रयोजनार्थं यथाविधि भ्रातृपुत्रग्रहणमनर्थकमत आह किञ्चेति। अन्यथेति; एतद्वचनद्वयस्य दत्तकाद्युपादाननिषेधकत्वे इत्यर्थः। अतएव "पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः, सपिण्डसन्ततिर्व्वापि क्रियार्हां नृपजायते" इत्यत्र पुत्रपदमुल्लिख्यापि पुनर्भ्रातृसन्ततिपदोपादानं सङ्गच्छते। अकृता वेति। अकृता अपुत्रिका; तत्सुतः दौहित्रः दत्तकाद्युपादानेति। इष्टापत्तौ व्यवहारविरोधः स्यादिति॥ ९ ॥

ननु सत्यपि भ्रातृपुत्रे दत्तकाद्युपादानस्य शास्त्रीयत्वे, बह्वीनामेकपत्नीनामेष एव विधिः स्मृत इति बृहस्पतिवचने, सर्व्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्। सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति मनुवचने च सपत्नीपुत्रे पुत्रधर्म्मातिदेशेन सत्यपि तस्मिन् दत्तकाद्युपादानमस्त्विति चेन्न, यथा, तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनमित्यत्रामिक्षार्थं प्रवृत्तस्योद्देश्यीभूतामिक्षापचारे आमिक्षा पुरुषं प्रवर्त्तयति न तु वाजिनम् अनुद्देश्यत्वेनाप्रयोजकत्वात्। यथा वा पितुः क्षयाहे पित्रादित्रिकस्य पार्व्वणे कृते मातामहादिश्राद्धाय न पुनः पार्व्वणारम्भः; तस्य पितृश्राद्धाधीनप्रवृत्तेः, तथाऽत्रापि भर्त्तुरनुज्ञाशास्त्रेण तत्पुत्रोपादानाय प्रवृत्तायास्तत्पुत्राभाव एव तदुपादानं न तु तत्पुत्रानपचारेऽपि स्वपुत्रापचारे तदुपादानं; तत्प्रवृत्तेरप्रयोजकत्वात्। तत्रालोकतापरीहारोऽस्या न स्यादित्यपेक्षायां मनुबृहस्पतिवचनद्वयं, सपत्नीपुत्रे पुत्रातिदेशेनालोकतापरीहारश्राद्धोपपादकं भर्त्तृवंशसन्तरेण चास्या वंशान्तरासम्भवेन तस्यैव स्ववंशकरत्वं चेत्यतः समस्तस्याऽपि पुत्रप्रयोजनस्य सम्भवेन सति सपत्नीपुत्रे न दत्तकाद्युपादानम्। भ्रातृपुत्रस्य तु वंशकरत्वाभावेन सत्यपि तस्मिन्नुपादीयन्ते दत्तकादयः इत्येतावान् परं विशेषः॥१०॥

भ्रातृपुत्रवत्सत्यपि सपत्नीपुत्रे पुनः पुत्रपरिग्रहापत्तिरित्याशङ्कामुत्तोल्य दूषयति नन्विति॥ दत्तकादीत्यादि; दत्तकप्रभृतिगौणपुत्रग्रहणमित्यर्थः॥ तप्ते पयसि अत्युष्णदुग्धे, तथाच अत्युष्णदुग्धे दधिमिश्रणेनामिक्षोत्पत्तिः स्यादिति भावः॥ वाजिभ्यो विश्वदेवेभ्यः, आमिक्षा घनीभूतं पयः; पय एव घनीभूतमामिक्षेत्यभिधीयते, इति भट्टवार्त्तिकोक्तिः। प्रवर्त्तयतीति; आमिक्षोत्पादनार्थे प्रवृत्तिं जनयतीत्यर्थः। पार्व्वणे कृते, पार्व्वणविधिना प्रत्याब्दिकश्राद्धे कृते, औरसचैवजान्यतरस्याग्निमावस्य, प्रेतपक्षामावस्यान्यतरस्तत पितृकनिरग्नेर्येति शेषः॥ न पुनः पार्व्वणारम्भ इति। तत्र पार्व्वणान्तरविधिप्रसक्ताविति शेषः॥

तस्येति, मातामहादिश्राद्धस्येत्यर्थः। पितृश्राद्धाधीनप्रवृत्तेरिति। पितरौ यत्र पूज्यन्ते तत्र मातामहास्तुवमित्यनेनात्र मातामहादिश्राद्धप्रसक्तावपि "कर्षूसमन्वितं त्यक्त्वा तथाद्यं श्राद्धषोड़शं, प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिरित्यनेन प्रत्याब्दिकश्राद्धे मातामहादिश्राद्धनिषेधात् सत्यपि पितृपक्षश्राद्धे प्रत्याब्दिकत्वात् न मातामहादिश्राद्धकरणमिति भावः। तथाच यथा ऋतुद्दिश्यवाजिनार्थं न पुनरामिक्षायाः प्रवृत्तिः, यथा वा प्रत्याब्दिकश्राद्धे कृते मातामहादिश्राद्धाय न पुनः पार्वणारम्भस्तथा भर्तृपुत्राऽपचार एव दत्तकाद्युपादानं, न तु भर्तृपुत्रानपचारेऽपीति समुदयार्थः॥ तत्प्रवृत्तेः, स्वपुत्रेच्छायाः; अप्रयोजकत्वात्; पुत्रपदस्याप्रयोजकत्वादिति भावः॥ तथाच यत्रैव भर्तुः प्रवृत्तिः तत्रैव पुत्रोपादानं, न तु भर्तुरिच्छामन्तरेण पुत्रोपादानमिति भावः। भ्रातृपुत्रेण नामसङ्कीर्त्तनानिर्वाहात् प्रयोजनापेक्षयायुक्तं भ्रातृपुत्रोपादानं; स्त्रियास्तु भर्तृनिरपेक्षवंशान्तराभावात् सपत्नीपुत्रेण तन्निर्वाहाच्च प्रयोजनमन्तरेण न तदपहरणमिति भावः॥ मनुबृहस्पतिवचनद्वयमिति, सर्वेषामेकजातानामित्यादि; यद्येकजाता बहवो भ्रातरश्च सहोदरा इत्यादि चेति॥ १०॥

ननु सति भ्रातृसुते तस्यैव पुत्रीकरणावश्यम्भावे यत्रैक एव भ्रातृपुत्रस्तत्रैव तदसम्भवः। न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषामिति वशिष्ठस्मरणादिति चेन्न एतस्य द्व्यामुष्यायणेतरविषये सावकाशत्वात्, द्व्यामुष्यायणे च हेतुवन्निगददर्शितसन्ततिविच्छेदाभावात् वेतालस्य च भैरवपत्रपुत्रीकरणे पौराणिकलिङ्गदर्शनाच्च। यथा; ततः कदाचिदुर्वश्यां भैरवो मैथुनं गतः। तस्यां स जनयामास सुवेशं नाम पुत्रकम्॥ तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम्। ततस्तौ तेन पुत्रेण स्वर्ग्यां गतिमवापतुरिति॥ ११॥

यत्रैक एव भ्रातृपुत्र इति, तथाच "नैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषामित्यनेन एकमात्रपुत्रकस्य पुत्रदानासम्भवेन तत्रैवासम्भव इत्यर्थः। असम्भवदोषं निराकरोति एतस्येति। एतस्य एकपुत्रदाननिषेधस्य, तथाच स हि सन्तानाय

पूर्वेषामित्यनेन वंशरक्षार्थं एकपुत्रदाननिषेधः ; द्व्यामुष्यायणस्य तु दातृग्रहीत्रोरुभयोरेव वंशकरत्वात् एकपुत्रस्थलेऽपि द्व्यामुष्यायणदत्तकसम्भवाच्च न विरोधः ॥ एकमात्रपुत्रस्य द्व्यामुष्यायणदत्तकविषये व्यक्तं दृष्टान्तयति ततः कदाचिदुर्वंश्यामित्यादि । तौ वैताल-भैरवौ ; तेन सुवेशेन ; अत्रैतादृशप्रबन्धेन भ्रातृपुत्रो ग्रहीतव्य एवेति न नियमः ; किन्तु सतिसम्भवे भ्रातृपुत्रग्रहणमुचितमिति भावः । अन्यथा तत्पित्रा अदाने विरोधः स्यादिति भावः ॥ ११ ॥

केन पुत्रो देय इत्याह शौनकः । नैकपुत्रेण कर्त्तव्यं पुत्रदानं कदाचन । बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नत इति ॥ द्विपुत्रस्याऽपि पुत्रदाने अपरपुत्रनाशे वंशविच्छेदमाशङ्क्याह बहुपुत्रेणेति । स्त्रियास्तु जीवति भर्त्तरि तदनुमतौ प्रोषिते मृते वा तदनुज्ञां विनापि । यथा वशिष्ठः । न स्त्रीपुत्रं दद्यात् प्रतिगृह्णीयाद्वा, अन्यत्रानुज्ञानाद्भर्त्तुरिति । अनुमतिश्च अप्रतिषेधेऽपि भवति, अप्रतिषिद्धं परमनुमतं भवतीति न्यायात् ॥ निरपेक्षदानमाह याज्ञवल्क्यः ॥ दद्यान्माता पिता वा यं सपुत्रो दत्तको भवेत् । तथा । मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वेति ॥ १२ ॥

नैकपुत्रेणेति । अत्र एकपुत्रदाने रागप्राप्तत्वान्निषेधः । ग्रहणे तु पर्य्युदासः । द्विपुत्रस्थले तु दाने निषेधः ; ग्रहणे तु न वा निषेधः न वा पर्य्युदास इति ॥ जीवति भर्त्तरीति । समीपे तिष्ठतीत्यर्थः । पुनः प्रोषिते इत्युक्तत्वान्न तु जीवितमात्रे इत्यर्थः । तदनुमतौ समीपवर्त्तिभर्त्तनुमतौ । अत्र वशिष्ठवचनं प्रमाणयति । न स्त्रीपुत्रं दद्यादिति । अनेनानुमतिमन्तरेण स्त्रिया दानप्रतिग्रहयोर्निषेध उपपद्यते ॥ अनुमतिश्चेति, तथाच साक्षात्शब्दोपात्ता अप्रतिषेधरूपा चेति द्विविधैवानुमतिर्मूलकृदभिमतेत्यर्थः । मातुर्निरपेक्षदानविषये स्फुटं प्रमाणयति याज्ञवल्क्य इति । अत्र मातापिता वेत्यनेन मातुः पितुश्च निरपेक्षदातृत्वमवगम्यते । ननु वाकारस्य समुच्चयार्थतैव इति चेन्न समुच्चयार्थत्वे निःसन्दिग्धार्थं द्वन्द्वादिकमेव निर्दिश्येतेति ॥ वाशब्दस्य विकल्पार्थस्वीकारे व्यक्तं विनिगमकं दर्शयति तथेति । अन्यतरेण मात्रा पित्रा वेत्यर्थः । नन्वेतन्मनुवचन-

अपविद्धपुत्रलक्षणप्रसङ्गे उक्तं न तु दत्तकलक्षणप्रसङ्ग इति चेत्तथापि न स्त्रीपुत्रं दद्यात् प्रतिगृह्णीयाद्वा, अन्यत्रानुज्ञानाद्भर्त्तुः; न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, स हि सन्तानाय पूर्वेषां; शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकस्तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः; इत्यत्र दानविक्रयत्यागेषु प्रभुत्वमुक्त्वा अभिहितस्य न दद्यादित्यस्य उपलक्षणतया दानविक्रयपरित्यागानामेव विधेयत्वं वाच्यं; ततश्च मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वेत्यत्र सर्वस्मृतिप्रबलमनुवचनविरोधात् पत्यनुमतिदानयोग्यस्थल एव स्त्रियादानाद्यनधिकार इत्येवं वशिष्ठस्य सङ्कोचो वाच्यः। ततश्च प्रोषिते मृते वा पत्यौ अनुमतिदानयोग्यताया अभावात् स्त्रियादानाद्यधिकार इति हृदयम्॥ १२॥

अथ पुत्रपरिग्रहविधिमाह शौनकः। शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्। अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च। संग्रहं संग्रहणविधिम्। समुपोष्यग्रहणात् पूर्वदिने कृतोपवासः। वृद्धगौतमः। वाससी कुण्डले दत्वा उष्णीषञ्चाङ्गुलीयकम्। आचार्य्यं धर्म्मसंयुक्तं वैष्णवं वेदपारगम्। मधुपर्केण संपूज्य राजानञ्च द्विजान् शुचीन्॥ राज्ञो विप्रकृष्टत्वे ग्रामस्वामिनम्। अनूवनाङ्ग्य सर्व्वांस्तु ग्रामस्वामिनमेव चेति स्मरणात्॥ द्विजानिति बहुत्वं त्रित्वपर्य्यवसितं कपिञ्जलन्यायात्। द्विजानां पूजनं याचनार्थम्। वर्हिः कुशमयञ्चैव पालाशं चेध्ममेव च। एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः॥ बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः॥ अग्न्याधानादिकं तत्र कृत्वाज्योत्पवनान्तकम्। दातुः समक्षं गत्वा च पुत्रं देहीति याचयेत्। दाने समर्थो दातास्मै ये यज्ञेनेति पञ्चभिः॥ दद्यादिति शेषः। बन्धूनात्ममातृपितृबन्धून्। ज्ञातीन् सपिण्डान्। तदाह्वानं दृष्टार्थं, बन्धूनाहूतान्। ब्राह्मणान्, पूर्वंवृतान्। चकारात् आहूतान् ज्ञातींश्च सम्भोज्येत्यर्थः॥ १३॥

पुत्रदातृयाच्यपुत्रनिरूपणानन्तरं पुत्रग्रहणविधिमभिधातुमाह अथेति। पुत्रसंग्रहमिति, अत्र संगृह्यते अनेनेति करणवाचेन संग्रहपदेन संग्रहविधिपर्य्यन्तं लभ्यते तथाच

संग्रहं संग्रहणविधिम्। उपोष्येति आनन्तर्य्यार्थक क्वाप्रत्ययादाह पूर्व्वदिने कृतोपवास इति॥ ग्रहणप्रकारमाह वृद्धगौतम इति। वाससी परिधानोत्तरीये; अत्राचार्य्यादिः सम्पूज्य इत्यनेन दत्त्वा इत्यनेन चान्वयात् कर्मसम्प्रदानतोभयप्राप्तौ "अपादानं सम्प्रदानं तथाधिकरणं पुनः। करणं कर्मकर्त्ता च द्वयोर्योगे परं भवेदित्यनेन कर्मतैव॥ कपिञ्जलन्यायादिति। कपिञ्जलानालभेतेति श्रुतिर्वर्त्तते, अत्र सकलकपिञ्जलवधस्याशक्यानुष्ठानतया अननुष्ठानलक्षणाप्रामाण्यात्, प्रथमोपस्थितत्वेन बहुत्वं त्रित्वपर्य्यवसितमितिमं सिद्धान्तितं; तद्वदत्रापि द्विजानित्यस्य सकलविप्राभिप्रायकत्वे सकलद्विजार्चनाया अशक्यानुष्ठानत्वेनाननुष्ठानलक्षणाप्रामाण्यादुक्तं द्विजानिति बहुत्वं त्रित्वपर्य्यवसितमिति भावः। याचनार्थमिति; एतेन ब्राह्मणद्वारा याचनं कर्त्तव्यमिति सूचितम्। कुशमयं कुशनिर्मितं, बर्हिः उपवेशनोपयोगि आस्तरणार्हं कुशमिति यावत्। पालाशं पलाशवृक्षसम्बन्धि; एतानिति। बर्हिः प्रभृतीनित्यर्थः। अग्न्याधानादिकं तत्रेति। स्वगृह्योक्तविधिना अग्निस्थापनप्रभृत्याज्योत्पवनान्तं कर्म, आज्यन्तु चतुर्भिः पूतं घृतम्। वह्निना चैव मन्त्रेण पवित्रेण च चक्षुषा, चतुर्भिरेव यत्पूतं तदाज्यमितरद्घृतमिति गृह्यासंग्रहात्॥-ये यज्ञेनेति। मन्त्रो यथा, ऋग्वेदसंहितायां दशममण्डले पञ्चमांशे द्वाषष्टिसूक्ते। ये यज्ञेन दक्षिणया समक्ता, इन्द्रस्य सख्यममृतत्वमानश। तेभ्यो भद्रमङ्गिरसो वोऽस्तु प्रति गृह्णीत मानवं सुमेधः॥ १॥ य उदाजन्पितरो गोमयं वस्वृते, नाभिं दत्परिवत्सरे बलम्। दीर्घायुत्वमङ्गिरसो वोऽस्तु प्रतिगृह्णीत मानवं सुमेधः॥ २॥ य ऋतेन सूर्य्यमारोहयन् पृथिवीं सातरक्षि। सुप्रजास्त्वमङ्गिरसो वोऽस्तु प्रतिगृह्णीत मानवं सुमेधः॥ ३॥ अयं नाभावदति वल्गुरवो गृहे देवपुत्राः तच्छृणोतम्। सुब्राह्मण्यमङ्गिरसो वोऽस्तु प्रतिगृह्णीये तमानवं सुमेधः॥ ४॥ विरूपासङ्गदृषयस्त इद्गम्भीरवेपसः तेऽङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे॥ ५॥ तदाह्वानं ज्ञात्यादीनामामन्त्रणं दृष्टार्थं दृष्टमात्रप्रयोजनार्थं न त्वदृष्टार्थम्। तेषामाह्वानाकरणे पश्चाद्दानप्रतिग्रहयोरस्वीकरणेन दुरन्ततासम्भावना स्यात्तन्निराकरणार्थमिति भावः। चकारादिति। ब्राह्मणांश्चेत्यत्रेति यावत्॥ १२॥

तथा, देवस्यत्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनि॥ वस्त्रादिभिरलङ्कृत्य पुत्रच्छायावहं सुतन्॥ पुत्रच्छाया पुत्रसादृश्यं, नियोगादिना स्वयमुत्पादन-

योग्यत्वमिति यावत्। तथा, नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम्। गृहमध्ये तमाधाय चरुं कृत्वा विधानतः। यस्त्वाहृदेत्यृचा चैव तुभ्यमग्नेत्यृचैकया। सोमोऽददददित्येताभिः प्रत्यृचं पञ्चभिस्तथेति। वृद्धगौतमः। पायसं तत्र साज्यञ्च शतसङ्ख्यञ्च होमयेत्। प्रजापते न त्वदेतामित्युद्दिश्य प्रजापतिमिति। वशिष्ठः। पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव गृह्णीयात् सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत्, विज्ञायते ह्येकेन बहूं स्त्रायते इति। निवेशनं गृहं सन्देहे इति दूरावस्थितबान्धवस्य अत्यन्तदेशभाषाविप्रकर्षादिना कुलशीलादिसन्देहो भवत्येव तथात्वे तन्निर्णयपर्य्यन्तं न व्यवहरेत्, तत्र हेतुरेकेनेति॥ बहून् पित्रादीन्। एतदन्यतरविधिरावश्यकः॥ १४॥

देवस्य त्वेतीति। मन्त्रस्तु देवस्य त्वा प्रसवेऽश्विनोर्बाहुभ्यां पुष्णो हस्ताभ्यां गृह्णाम्याविति। अङ्गादङ्गेत्यर्चं जपेति। मन्त्रस्तु, अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे॥ आत्मा वै पुत्रनामासि सजीव शरदः शतम्॥ नियोगादिनेति; नियोगः आत्मीयायां पुत्रोत्पादनार्थं धनप्रदानादिना सन्तोषवाक्येन च अन्यपुरुषप्रवर्त्तनार्थमनुमतिः॥ आदिना विवाहपरिग्रहः। तथाच यस्यां नियोगेन विवाहेन वा पुत्रोत्पादनयोग्यता स्यात्तद्गर्भोत्पन्नः पुत्रः पुत्रच्छायावह इति भावः॥ ततश्च भ्रातृपितृव्यमातुलदौहित्रभागिनेयादीनां निरासः पुत्रसादृश्याभावात्॥ विधिनान्तरमाह तथेति। स्वस्तिशब्दैः स्वस्तिवाचनमन्त्रैः सुतं आधाय रक्षित्वा विधानतः यथाशास्त्रं चरुं हुत्वा प्रधानचरुहोमं कृत्वा इत्यर्थः। चरुहोमानन्तरं यस्त्वाहृदादिसप्तमन्त्रकरणकसप्ताहुतिदानायाह यस्त्वाहृदेत्यादि। मन्त्रस्तु, यस्त्वा हृदा कीरिणा मन्यमानो मर्त्त्यं मर्त्त्यो वहसि जातवेदो यशोऽस्मासु धेहि प्रजाभिरग्नेरमृतत्वमस्याः। तुभ्यमग्ने इति। अत्रादावेकारस्याथ ततो यथोपस्तौ गुणनिषेधेऽपि आर्षत्वात् पुनः सन्धिः॥ एकया ऋचा एकेन मन्त्रेण। मन्त्रस्तु, तुभ्यमग्ने परवहन्सूरायं वहतु नः सह पुनः पतिभ्यो या आनन्दा अग्ने प्रजया सह॥ १॥

सोमोऽददिति। प्रत्यृचं सोमोऽददित्येताभिः पञ्चभिः ऋग्भिरिति यावत्। पञ्चमन्त्रा यथा; सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये रैच पुत्रश्चादादग्निर्मह्यमथो इमाम्॥१॥ प्रमे पतिं यानः पन्थाः कल्पितां शिवा अरिष्टा पतिलोकं गमेयम्॥२॥ अग्निरैतु प्रथमो देवताभ्यः सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् तदयं राजा वरुणोऽनुमन्यताम् यथेयं स्त्रीपौत्रमघन्नरोदात् स्वाहा॥३॥ इमा अग्निस्त्रायतां गार्हपत्यः प्रजामस्यै जरदष्टिं कृणोतु अशून्यो पन्था जीवतामस्तु मातापौत्रमानन्दमभिबुध्यतामियं स्वाहा॥४॥ द्यौस्ते पृष्ठं रक्षतु वायुरुरू अश्विनौ च स्तनयञ्च ते पुत्राः सविताभिरक्षता वाससः परिधानात् बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु स्वाहा॥५॥ शौनकोक्तहोमविध्यतिरिक्तमाह वृद्धगौतम इति। प्रजापते न त्वदेतामिति। तन्मन्त्रस्तु, प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परिता बभूव यत्कामास्ते जुहुमस्तन्नोऽस्तु वयं स्याम पतयोरेयाणां इति। एतेन शौनकोक्तकल्पेन ग्रहणपक्षेऽपि वृद्धगौतमोक्तप्रजापतिदेवताकशतसंख्याकाज्यहोमः शक्तेन कर्त्तव्य इति हृदयम्। प्रकारान्तरं दर्शयति वशिष्ठ इति। बन्धूनात्मपितृमातृबन्धून् राजनि ग्रामाधीशे निवेद्य न गृहं व्याहृतिभिर्व्यस्ताभिः समस्ताभिश्चाज्यभागान्ते आहुतिचतुष्टयं हुत्वेत्यर्थः। आहुतिचतुष्टयन्तु, भूः स्वाहा, भुवः स्वाहा, स्वः स्वाहा भूर्भुवः स्वः स्वाहा इति॥ अदूरबान्धवं सन्निकृष्टसपिण्डं अदूरश्चासौ बान्धवश्चेति कर्मधारयसमासाश्रयणात् साधु। दूरबान्धवमिति, दूरे बान्धवा यस्यासौ दूरबान्धवः अत्यन्तदेशभाषाविप्रकृष्टस्तम्। एकेनेति, एकेन पुत्रेण द्वारेणेति यावत्; जायते गृहीतेति शेषः। तन्निर्णयपर्यन्तमिति। कुलशीलादिनिश्चयपर्यन्तमित्यर्थः। न व्यवहरेत् न गृह्णीयात्। एकेन परिगृहीततनयेन, विजातीयपुत्रस्य श्राद्धादिकरणनिषेधात् सजातीयत्वनिश्चयानन्तरं परिग्रहीतव्य इति भावः। एतदन्यतरविधिरिति। वशिष्ठशौनकोक्तान्यतरविधिरित्यर्थः। एतेनैतदन्यतरोक्तपद्धतिमन्तरेण परिगृहीतस्य न दत्तकत्वसिद्धिरित्यवगम्यते॥१४॥

ततश्च शौनकः। दक्षिणां गुरवे दद्यात् यथाशक्ति द्विजातयः। नृपो राज्यार्द्धमेवाथ वैश्यो वित्तशतत्रयम्। शूद्रः सर्वस्वमेवापि अशक्तश्चेद् यथाबलम्। राज्यार्द्धमर्द्धराज्योत्पन्नमेकवर्षीयद्रव्यम्। प्रदद्यादर्द्धराज्योत्थमेकवर्षाहृतं धनमिति वृद्धगौतमस्मरणात्; उत्तम-

मध्यमाधमभेदेन वित्तानां सुवर्णरजतताम्राणामिति ज्ञेयम्॥ अत-श्चयं नाणकानां सौवर्णमथ राजतम्। प्रदद्यात्ताम्रमथवा उत्तमादि-व्यवस्थयेति वृद्धगौतमस्मरणात्। सर्वस्वमेकवर्षस्थितिलभ्यमिति यावत्॥ १५॥

वित्तमतत्रयमिति विवृणोति वित्तानामित्यादि। नाणकानां मुद्राचिह्नयुक्तनिष्कादि-कानाम्। तथाच मिताक्षरायां याज्ञवल्क्यः। तुलाशासनमानानां कूटकृन्नाणकस्य च। एभिश्च व्यवहर्त्ता यः स दाप्योदण्डमुत्तममिति॥ १५॥

तैत्तिरीयाणान्तु विधिविशेषमाह बौधायनः। अथ पुत्रपरि-ग्रहविधिं व्याख्यास्यामः प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकं आचार्य्यञ्च वेदपारगं कुशमयं वर्हिः पर्ण-मयमिध्ममित्यथ बन्धूनाहूय निवेशनस्य मध्ये राजनि निवेद्य परिषदि वागारमध्ये ब्राह्मणवागालस्बेन उपविश्य पुण्याहं स्वस्ति ऋद्धि-मिति च वाचयित्वा यद्देवयजनोल्लेखप्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा मे पुत्रं देहीति भिक्षेत ददानीतीतर आह तं परिगृह्णाति धर्म्माय त्वा परिगृह्णामि, सन्तत्यै त्वा परिगृह्णामि इत्यथैनं वस्त्रकुण्डलादिभिरलङ्कृत्य परिधानप्रभृत्यग्निमुखं कृत्वा पक्वा जुहोति, यस्त्वाहृदा कीरिणामन्यमान इति पुरोऽनुवाक्य-मनूच्य यस्मैवं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टिकृत्प्रभृतिसिद्धमाधेनुवरप्रदानदक्षिणां ददाति एते च वाससी एते कुण्डले एतच्चाङ्गुरीयकं य एवं त्वौरस उत्पद्यते तुरीय-भागी सम्भवतीति आह स्म बौधायन इति। एवमुक्तविध्यभावे परि-गृहीतस्य विवाहोचितधनमात्रभागित्वं न त्वंशभागित्वमिति वक्ष्यते॥ १६॥

तैत्तिरीये विशेषयति तैत्तिरीयाणान्त्विति। अत्र तैत्तिरीयत्वेन विशेषाभिधानात्त-च्छाखिभिरेवैतद्बौधायनोक्तरीत्या दत्तको ग्रहीतव्यो नान्यैरिति सूचितम्। प्रतिग्रहीष्यन्

पुत्रमिति शेषः॥ पर्णमयमिध्मं पर्णमेवाहुतिद्रव्यम्। व्याहृतिभिः व्यस्ताभिः समस्ताभिश्च आहुतिचतुष्टयं हुत्वेत्यर्थः। परिषदि सभायां; तथाच "समज्या परिषद्गोष्ठिसभासमितिसंसदः" इत्यमरः॥ ब्राह्मणवागालम्भेन, ब्राह्मणकर्तृकपठितमन्त्रेण; आप्रणीताभ्यः, प्रणीतापात्रस्थापनपर्य्यन्तं; इतरोदाता, परिधानप्रभृतिवस्त्रपरिधानपर्य्यन्तं, अग्निमुखं अग्न्यभिमुखं कृत्वा पक्का चरुमिति शेषः; जुहोति तेन चरुणेति यावत्, पुरोऽनुवाक्यमनूद्य इति। यस्त्वाहृदेत्यादिमन्त्ररूपमनुवाक्यं पठित्वेत्यर्थः॥ यस्त्वाहृदेत्यादिमन्त्रस्तु तैत्तिरीयसंहिताभाष्ये। यस्त्वाहृदा कीरीशामन्यमानो मर्त्त्यो मर्त्त्यं जोहवीमि जातवेदो यशोऽस्मासु धेहि प्रजाभिरग्ने अमृतत्वमानश इति। यस्मै त्वमित्यादि; एतन्मन्त्रस्तु तैत्तिरीयसंहिताभाष्ये; अथ याज्यामाह, यस्मै त्वं सुकृते जातवेद उं लोकमग्ने कृणवः स्योनं सपुत्रि रैं वीरवन्तं गोमन्तं नशते स्वस्ति। तथाच एतन्मन्त्ररूपयाज्यया होतव्य इत्यर्थः। व्याहृतीः भूरादिचतुष्टयाहुतीः। वरो गवादि, तस्माद्गौर्वरमुच्यत इत्युक्तेः; तथाच धेनुदानदक्षिणापर्य्यन्तं वरशब्दवाच्यगवादिदानदक्षिणापर्य्यन्तं वा। शक्तस्य धेनुदानमशक्तस्य गवादिदानम्। य एवमिति। तथाच दत्तकग्रहणानन्तरमौरसोत्पत्तौ दत्तकश्चतुर्थभागभागी भवेदित्यवगम्यते। उक्तविध्यभाव इति, वशिष्ठशौनकान्यतरोक्तविधानानुष्ठाने इति भावः। ननु वौधायनवृद्धगौतमोक्तविध्यन्तरसत्त्वेऽपि वशिष्ठशौनकान्यतरोक्तविधानानुष्ठाने इत्येतादृगर्थः कथमवलम्बित इति चेन्न वौधायनवृद्धगौतमोक्तेः वशिष्ठशौनकान्यतरोक्त्यन्तर्भूतत्वात्॥ १६॥

तथा मनुः। गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा इति। एतेन दातृधने दानादेव पुत्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यते। तथाच गोत्रादिनिवृत्तेरेव दर्शनात् संस्कुर्य्यात् स्वसुतान् पितेति स्मरणात् ग्रहणानन्तरसम्भाव्यमाना एव दत्तकस्य संस्काराः प्रतिग्रहीत्रा कार्य्याः न पुनर्जनकेन कृतपूर्व्वा अपि निवर्त्तनीयाः। एवमेनः शमं याति वीजगर्भसमुद्भवमिति। चित्रं कर्म्म यथानेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैरिति वचनवोधितस्य तत्तत्क्रियातो वीजादिदोषनाशस्य ब्राह्मण्याधानस्य च जातत्वेन तदावृत्तौ प्रमाणाभावात्।

अन्यथा अष्टौ संस्कारकर्म्माणि गर्भाधानमिव स्वयम्। पिता कुर्य्यात्तदन्यो वा तस्याभावेऽपि तत्क्रमादित्यनेन पुंसवनसीमन्तोन्नयनयोरपि करणापत्तेः; तच्चायुक्तं असाम्प्रदायिकत्वात्। किञ्च ग्रहणानन्तरमेव पितृत्वेन संस्काराधिकारात् तत्पूर्वभाविषु संस्कारेषु प्रतिग्रहीतुरनधिकार एवायातिकालाभावात्। यदि च तत्पूर्वभाविनोऽपि संस्काराजनकेन न कृताः तदा वीजगर्भदोषनाशावश्यकत्वेन क्रमानुरोधेन च प्रतिग्रहीत्रैव ते समाधेयाः। एवञ्च उपनयनमात्रकरणेऽपि प्रतिग्रहीतुर्दत्तकपुत्रसिद्धिः। अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति वशिष्ठस्मरणात्। एतच्चाष्टमाब्दरूपतन्मुख्यकालाभ्यन्तरवर्त्तिपरिग्रहे वोध्यं, अन्यथा मुख्यकालेऽधिकारयोग्यत्वाभावे गौणकालेऽनधिकारान्न तत्सिद्धिरिति। अत्र च जनकप्रतिग्रहीत्रोरुभयोरपि पुत्राभिसन्धाने सति दत्तकस्य द्व्यामुष्यायणत्वेनोभयगोत्रभागित्वम्। विशेषो वक्ष्यते ॥ १७ ॥

धर्मान्तरमाह तथा मनुरिति। स्वधा, श्राद्धं श्राद्धे गोत्राद्युल्लेखमाहाश्वलायनः। उक्त्वा पित्रादिसम्बन्धं नामगोत्रं स्वधा नमः। बहूचस्तत्क्रमेणैव तर्पयामीति तर्पयेत्। श्राद्धेऽपि विधिरेषः स्यादाश्वलायनशाखिनाम्। गोभिलोऽपि गोत्रं स्वरान्तं सर्वत्र इत्यादि। पारस्करप्रचेतसावपि, गोत्रसम्बन्धनामानि पितॄणां परिकल्पयन् इति। वेतनरूपलाङ्गलस्य वेतनमन्तरेण च कर्मणि प्रवृत्त्यभावान्नितरां पिण्डस्य धनाधीनत्वं, पिण्डपदमत्र श्राद्धाद्यौर्द्धदैहिककर्मोपलक्षणम् ॥ एतेनेति, दत्तपुत्रस्य जनक ऋक्थाभागित्वबोधकैतद्वचनेन; दातृधने दाता उत्पादयिता तस्य धने जनकधने इत्यर्थः। पुत्रत्वेति, पुत्रत्वस्य पुत्रत्वसम्बन्धस्येत्यर्थः। गोत्रादीति। अत्रादिपदं धनभागित्वादिग्राहकम्। ग्रहणानन्तरेति। ग्रहणात् प्राक्कालवर्त्तिसंस्कारकरणे, संस्कुर्य्यात् स्वसुतान् पितेत्यनेन पितुरेव संस्कारकरणेऽधिकारात् तत्कालीनपितुर्दातुरेवाधिकारः; न तु ग्रहीतुरपि तस्य तदानीं पितृत्वाभावात्; ग्रहणानन्तरवर्त्तिसंस्कारास्तु ग्रहीत्रैव कार्य्याः, तदानीं पितृत्वेन तस्यैव तत्कालीनसंस्कारेऽधिकारादिति हृदयम्। ननु ग्रहणानन्तरं ग्रहीतुः पितृत्वेन कथं

पुनर्ग्रहीत्रा न सर्वसंस्कारा: क्रियन्ते इत्यतस्तन्निराकरणायाह न पुनर्जनकेनापीत्यादि। तथाच सकृत्कृते कृत: शास्त्रार्थ इत्यनेन न पुन: करणम्। निवर्त्तनीया: प्रवर्त्तनीया: कर्त्तव्या इत्यर्थ:। एन: पापं ब्राह्मण्याधानस्य ब्राह्मण्यस्थापनस्य, तदावृत्तौ संस्कार-करणावृत्तौ। अन्यथेति। कृतपूर्वसंस्कारस्याऽपि पुन: करणस्वीकारे इत्यर्थ:; तत्-क्रमात् पितृशाखोक्तक्रमात्। ननु पुंसवनसीमन्तोन्नयनयो: कालाभावात् कथं पुन: करणापत्तिरिति चेदुच्यते, या नार्य्यकृतसीमन्ताप्रसूते च कथञ्चन। अङ्के निधाय तं बालं पुन:संस्कारमर्हतीति वृद्धराजमार्त्तण्डवचनेन सीमन्तोन्नयनस्य गौणकालाभिधानात् सांर्द्दृष्टकन्यायात् पुंसवनस्याऽपि कथञ्चित् गौणकालं सम्भाव्य एतदुक्तमिति। काला-भावादिति; मुख्यकालाभावादित्यर्थ:; ननु मुख्यकालाभावेऽपि गौणकालसत्त्वात् कथं कालाभावादित्युक्तमिति चेन्न, मुख्यकालेऽधिकारायोग्यस्य गौणकालेऽनधिकारात्। ग्रहणपूर्वभाव्यकृतसंस्काराणां करणपक्षे प्रमाणं दर्शयति यदि चेति। तत्पूर्वभाविन: ग्रहणपूर्ववर्त्तिन:। बीजगर्भोपनाशावश्यकत्वेनेति। एवमेन: शमं याति बीजगर्भ-समुद्भवमित्युक्ते:। क्रमानुरोधेन चेति॥ येषान्तु न कृता: पित्रा संस्कारविधय: क्रमात्। कर्त्तव्या भाव्यमिसेषां पैतृकादेव तद्धनादित्यनेनेति यावत्॥ ग्रहीत्रा केवलोपनयन-संस्कारकरणेऽपि दत्तकत्वसिद्धिरिति सिद्धान्तयति एवञ्चेति। ग्रहणानन्तरसम्भाव्यमान-संस्कारकरणे दत्तकस्य सिद्धत्वे च॥ उपनयनमात्रकरणेऽपि दत्तकसिद्धौ स्पष्टं प्रमाण-माह अन्यशाखोद्भव इति। अन्या ग्रहीतृशाखेतराशाखा यस्य स तस्मादुद्भव उत्-पत्तिर्यस्य स:॥ एतद्वचने उपनायित इत्येतावन्मात्राभिधानात् स्वशाखभागित्युक्तत्वाच्च उपनयनमात्रसंस्कारकरणादेव ग्रहीतुर्दत्तकपुत्रसिद्धिर्भवत्येवेति लभ्यते। एतच्चेति। उप-नयनमात्रसंस्कारकरणाद्दत्तकपुत्रसिद्धिश्चेत्यर्थ:। अष्टमाब्देति। एतद्ब्राह्मणमात्रविषयम्; गर्भाष्टमाब्दस्य ब्राह्मणोपनयने मुख्यत्वेनाभिधानात्। क्षत्रियविशोस्तु, एकादशद्वादश-वर्षयोर्यथाक्रमेण उपनयनमुख्यकालत्वाभिधानात्तयो: क्रमेण एकादशद्वादशवर्षौ दत्तक-ग्रहणकालाववगन्तव्यौ॥ तथाच याज्ञवल्क्य:। गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्। राज्ञामेकादशे सैके विशामेके यथाकुलमिति। शूद्रस्य तूपनयनाभावात् प्रधानसंस्कार-त्वेन विवाहस्य तन्मुख्यकालषोड़शवर्षपर्य्यन्तं दत्तकग्रहणकाल इति सुधीभिर्विभाव-नीयम्। अन्यथेति; अष्टवर्षानन्तरमपि ग्रहीतुमर्हतीत्युक्तावित्यर्थ:। तत्सिद्धिरिति। दत्तकपुत्रसिद्धिरित्यर्थ:॥ अत्रेति॥ दत्तकग्रहणे इत्यर्थ:। विशेषो वक्ष्यते इति, द्व्यामुष्यायणकथनप्रसङ्गे इति शेष:॥ १७॥

यत्तु पुराणनाम्ना पठन्ति। पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूड़ान्तं न पुत्रः स पुत्रतां याति चान्यतः॥ चूड़ाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते। यदि स्यात् कृतसंस्कारो यदि वातीतशैशवः। ग्रहणे पञ्चमाद्वर्षात् पुत्रेष्टिं प्रथमं चरेदिति॥ १८॥

उपनयनमुख्यकालपर्य्यन्तं पुत्रग्रहणार्हतां प्रतिपाद्य तत्र पञ्चवर्षानन्तरं चूड़ादिसंस्कारानन्तरञ्च ग्रहणायोग्यत्वरूपविरोधं मीमांसयितुमुत्थापयति यत्त्विति। यः पुत्रः पितुर्जनकस्य गोत्रेण आचूड़ान्तं संस्कृतः कृतसंस्कारः सपुत्रः अन्यतः अन्यस्य पुत्रतां न याति न प्राप्नोति। अनेन जातकर्म्मादीनां चूड़ान्तानां संस्काराणां पुत्रताहेतुत्वमुक्तं; आचूड़मित्युक्ते यदन्तग्रहणं तदकृतार्षसमसंख्यशिखस्य पुत्रीकरणाभ्यनुज्ञानार्थं प्रधाना निष्पत्त्या पुत्रदानार्हत्वात्। एतदेव स्पष्टीकृत्याह चूड़ाद्या इति॥ यदि तिजगोत्रेण गृहीतृगोत्रेण चूड़ाद्याः चूड़ाप्रभृतिकाः संस्काराः कृतास्तदा ते दत्ताद्यास्तनयाः स्युः। अन्यथा चूड़ादिसंस्काराकरणे दास उच्यते, गृहीतपुत्र इति शेषः। पुत्रेष्टिमिति। पुत्रे जातेऽरणिं मथित्वा तस्मिन्नायुष्यहोमान् जुहोति इत्यादिना विहितामित्यर्थः॥ १८॥

तदमूलं ; समूलत्वेऽपि यज्जनकगोत्रेण चूड़ान्तसंस्कारसंस्कृतस्य न ग्रहीतुः पुत्रत्वं ग्रहीत्रैव चूड़ादिसंस्कारकरणे तत्। यदि च कृतचूड़ोऽतीतपञ्चवर्षो वा ग्राह्यो भवति न तदाऽस्य पुत्रत्वं सम्भवतीति च विवृण्वन्ति तन्न। अनुवादापत्तेः ; पञ्चवर्षाभ्यन्तरगृहीतस्याप्युपनयनात् पूर्वं सकलशिष्टानुमोदितपुत्रत्वव्यवहारानुपपत्तेः तदानीं ग्रहीतरि मृते तच्छ्राद्धानधिकारापत्तेश्च॥ १९॥

तदमूलमिति। प्रामाणिकैरधृतत्वादित्यर्थः। यथाकथञ्चित् समूलत्वमाशङ्क्याह समूलत्वेऽपीति ; जनकगोत्रेणेति। जनकगोत्रेण कृतचूड़ान्तसंस्कारस्य अतीतपञ्चवर्षस्य च न पुत्रत्वमित्यर्थः। इति विवृण्वन्ति केचिदिति शेषः॥ तन्नेति। अनुवादापत्तेरिति। अनुवादस्तु प्राप्तिः पुनः कथनं, तथाच पितुर्गोत्रेणेत्यादि पूर्ववचनेनैव चूड़ा-

करणानन्तरग्रहणे पुत्रत्वाभावप्राप्तौ पुनश्चूड़ाद्या इत्यादिकथनेनानुवादापत्तिरिति भावः॥ दूषणान्तरमाह पञ्चवर्षाभ्यन्तरेति॥ अत्र पञ्चवर्षानन्तरेत्यपपाठः; परमतावलम्बनपूर्वकदूषणस्यौचित्यात्॥ सकलशिष्टानुमोदितेति। तथाच शिष्टाचारविरोधः स्यात्॥ बलवान् लौकिको वेदात् लोकाचारन्तु कल्पजेदित्यनेन, आचारश्चैव साधूनां प्रमाणं वेदवद्भवेदित्यनेन च शिष्टाचारस्य वेदवत्प्रामाणिकत्वेन तद्विरोधो दोषायेति भावः। तदानीमिति; तात्कालिकग्रहणानन्तरमित्यर्थः॥ तच्छ्राद्धेति; तस्य पुत्रत्वाभावेनैव श्राद्धेऽनधिकार इत्यर्थः॥ न चेष्टापत्तिरिति वाच्यं पतित्वाद्यदुष्टस्य नित्यश्राद्धाकरणे प्रत्यवायस्यावश्यम्भावादिति॥ १९॥

किन्त्वयं वचनार्थः। जनकगोत्रेण कृतचूड़ान्तसंस्कारस्य पुत्रत्वं निषिध्य प्रतिगृहीत्वा पुनश्चूड़ादिकरणे तत्प्रतिप्रसूतम्। ततश्च कृतसंस्कारस्यातीतपञ्चवर्षस्य च गृहीत्वा चूड़ादिकरणात् पूर्वं दासत्वा-क्षेपात् चूड़ादिकरणानन्तरं पुत्रत्वं लब्धम्॥ अकृतसंस्कारस्यानतीतपञ्चवर्षस्य तु परिग्रहमात्रादेव तत्प्राप्तं तच्च विहितम्। अथवा जनकेन चूड़ान्तं संस्कृतोऽपि पुत्रो न पुत्र इत्यपुत्रत्वादेशः, यतोऽन्यतश्च पुत्रतां यातीति हेतुरुपदिष्टः॥ तथाच एकस्य पुत्रपदस्य चकारस्य च वैयर्थ्यदूषणमपि परिहृतम्॥ एवञ्च चूड़ाद्या इत्यतद्गुणसंविज्ञानबहुव्रीहिणा द्विजातीनामुपनयनलाभः शूद्रस्य तु विवाहादिलाभः। अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति प्रागुक्तैकवाक्यत्वात्॥ पञ्चमाद्वर्षादिति। ब्रह्मवर्च्चसफलार्थिविप्राभिप्रायम्। ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमे इति मनुवचने तत्कामस्य पञ्चमवर्षस्यैव उपनयनमुख्यकालत्वेन तदेकमूलत्वात्॥ तदनर्थिनस्त्वाष्टमाब्दादिति। क्षत्रियादेरप्युपनयनतत्तन्मुख्यकालादरः। मुख्यकालेऽपि सिद्धाधिकारयोग्यत्वस्यैव गौणकालेऽपि संस्काराधिकारादित्युक्तप्रायम्। चूड़ायां गौणकालादरस्तु वचनबलादेव। पुत्रेष्टिमिति;

वर्णत्रयस्यैवाधिकारात् तेन पुत्रेष्टिपूर्वकचूड़ादिभिः पुत्रत्वं सम्पाद्यम्। शूद्रेण तु तदापि संस्कारमात्रादेवेति सर्वमनवद्यम् ॥ २० ॥

परीक्षाव्याख्यानदूषणानन्तरं स्वयं व्याचष्टे किल्वयमिति। पुत्रत्वं निषिध्येति। पितुर्गोत्रेण यः पुत्रं इत्यादि पूर्ववचनेनेति यावत्। पुनश्चूड़ादिकरणे ग्रहणानन्तरं पुत्रत्वसम्पादनार्थमिति भावः। तत्, पुत्रत्वम्। प्रतिप्रसूतमिति; चूड़ाद्या यदि संस्कारा इत्यादिपरवचनेनेति शेषः। निर्गलितार्थमाह ततश्चेति॥ पुनश्चूड़ादिकरणे पुत्रत्वस्य प्रतिप्रसूतत्वाच्च। अकृतसंस्कारस्येति। तथाचात्र वशिष्ठशौनकाद्युक्तरीत्याविधिनैव पुत्रत्वं लभ्यं, न त्वत्र चूड़ादिसंस्कारकरणापेक्षा; एतत्पुराणवचनेन कृतचूड़ादिकस्यातीतपञ्चवर्षस्य वा ग्रहणे चूड़ादिकरणस्यावश्यकत्वात्। तच्चेति; वशिष्ठाद्युक्तपरिग्रहविधानञ्च। विवृतं, पुत्रपरिग्रहविधिकथनाकाङ्क्षायामिति यावत्॥ ननु प्रतिग्रहीत्रा पुनश्चूड़ादिकरणे इत्याद्युक्तिर्न संगच्छते ग्रहणानन्तरं चूड़ादिकरणात् प्राक् तस्य दासत्वाक्षेपात् पुत्रत्वाभावात् संस्कुर्य्यात् स्वसुतान् पितेत्यादिवचनेन पितुः पुत्रस्य संस्कारकरणेऽधिकारावगमात् तदभावात्तदसिद्धेश्चेत्यत आह अथवेति॥ चूड़ान्तं संस्कृतोऽपि कृतचूड़ान्तसंस्कारोऽपि न पुत्रः न स्वमात्रपुत्रः इति अपुत्रत्वादेशः, एकमात्रपुत्रत्वाभावादेशः, पुत्रस्येति शेषः। यतः यस्मात्, अन्यतश्च अन्यस्य च ग्रहीतुरित्यर्थः; पुत्रतां द्व्यामुष्यायणदत्तकतां याति प्राप्नोति। एकस्येति॥ तथाच मत्कृतैतद्व्याख्यानेन यः पुत्र इत्युक्त्वा पुनर्न पुत्र इत्युक्तपुत्रपदस्य याति चान्यत इत्यत्रोक्त चकारस्य च वैयर्थ्यदूषणं नास्त्येवेति भावः॥ पूर्व्वोक्तव्याख्याने तु एकस्य पुत्रपदस्य चकारस्य च वैयर्थ्यमेवेति। एवञ्चेति। अकृतोपनयनस्य ग्रहणस्वीकारे च॥ चूड़ाद्या इत्यतद्गुणेति। चूड़ा आद्या येषां ते चूड़ाद्या उपनयनादयः॥ शूद्रस्येति। तथाचास्योपनयनाभावात् विवाहस्य मुख्यसंस्कारत्वेन तत्पर्य्यन्तमेव दत्तकग्रहणकाल इति लभ्यते। उपनयनमात्रसंस्कारेण दत्तकत्वसिद्धौ वचनमपि दर्शयति अन्यशाखोक्तवेति॥ ननु गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनमित्यनेन गर्भाष्टमस्यैवोपनयनमुख्यकालत्वेन पञ्चमवर्षपर्य्यन्तं दत्तकग्रहणकाल इत्युक्तं कथं संगच्छते अत आह ब्रह्मवर्चसेति। तदेकमूलकत्वात् मनुवचनैकमूलकत्वात्। तदनर्थिनः ब्रह्मवर्चसानर्थिनः, आष्टमाब्दादष्टमाब्दपर्य्यन्तं, एतद्विप्रविषयं; क्षत्रियादेरप्युपनयनतन्मुख्यकालादर इति वक्ष्यमाणोक्तेः॥ अत्रायं व्यवस्था निष्कर्षः। ब्राह्मणक्षत्रियवैश्यानां क्रमशो गर्भाष्टम-

गर्भैकादशगर्भंद्वादशवर्षादर्व्वाक् पुत्रग्रहणेऽधिकारः ततो नाधिकारः। शूद्रस्य षोड़शवर्षादर्व्वाक् पुत्रग्रहणेऽधिकारः, ततो नाधिकार इति। मन्वादिवचने सदापदेन कालाशौचेऽपि दत्तकं ग्रहीतुमर्हतीति॥ अतएव नवद्वीपराजधान्यां कालाशौचे दत्तको ग्रहीत इत्युपाध्यायादिमुखात् श्रूयते। मुख्यकालेऽपीति। एतेनोपनयनमुख्यकालानन्तरं ग्रहीतुं नार्हतीति प्रतिपाद्यते। मुख्यकाले तस्योपनयनसंस्कारकरणानधिकारित्वेन गौणकाले ग्रहणानन्तरमनधिकारादिति सुधीभिर्भाव्यम्॥ सिद्धेति। सिद्धमधिकारयोग्यत्वं यस्य स तस्य। अतएव हरिनाथोपाध्यायेनापि अकृतोपनयनस्य गृह्यदत्तकत्वमुक्तम्। यथा; तत्र पञ्चमवर्षपर्य्यन्तं मुख्यकालस्तदुत्तरमुपनयनपर्य्यन्तं गौणकाल., एतच्च ब्राह्मणादित्रयाणां, शूद्रस्य विवाहपर्य्यन्तम्। यदाह वशिष्ठः। याह्यमुपनयनात् पूर्वं षष्ठाद्दयपि छायते॥ तत्परं पञ्चमे वाऽपि याह्यो दासो भवेदिति। तत्परमुपनयनात् परम्। अन्यशाखोद्भवो दत्तो ग्रहीत्रैवोपनायितः। स्वशाखोक्तेन विधिना स भवेत् स्वस्य गोत्रभागिति॥ ननु तत् कथं पञ्चवर्षादावकृतचूड़स्य ग्रहणमत 'आह चूड़ायामिति॥ वचनबलादिति। अन्यशाखोद्भव इत्यादिवचनबलादित्यर्थः। ननु तद्वचनादुपनयनात् प्राक् ग्रहीतुमर्हतीति लभ्यते, न तु तद्वचनेन चूड़ाया गौणकाले कर्त्तव्यता लभ्यते इति चेत् क्रमानुरोधादिति ब्रूमः। तथाच संस्काराणां क्रमिककर्त्तव्यत्वेन अवश्यं तदनुरोधात् गौणकालेऽपि चूड़ाकर्त्तव्येति बोध्यम्॥ पुत्रेष्टिमिति। ग्रहणे पञ्चमाद्वर्षादित्यत्रैवेति यावत्। "इष्टापूर्त्तं द्विजातीनां धर्म्मः सामान्य उच्यते। अधिकारी भवेत् शूद्रः पूर्त्तधर्म्मे न वैदिके इत्यनेन पुत्रेष्टिकरणे शूद्रस्यानधिकारादाह वर्णत्रयस्यैवेति॥ तेन पुत्रेष्टिकरणस्यावश्यकत्वेन॥ पुत्रेष्टिपूर्वकेति॥ अत्र चूड़ादिभिरित्यभिधानात् सर्व्वत्रैवाकृतचूड़दत्तकग्रहणे चूड़ाकर्त्तव्येति प्रतीयते॥ एतेन यत् केनचित् चतुर्थवर्षादूर्द्ध्वमेवात्र पुत्रेष्टिं प्रतिनिमित्तमित्यभिहितं तद्धेयम्॥ संस्कारमात्रादेवेति। आर्त्तं शूद्रः समाचरेदित्यादिना वैदिकेऽनधिकारादित्यर्थः॥ २०॥

एवञ्च सर्व्वेषामेव प्राचां कालविशेषमनन्तर्भाव्यैव पुत्रपरिग्रहविधानमुपपद्यते। उक्तार्थस्य स्वतःसिद्धत्वात्॥ अथैवमुक्तवचनपरव्याख्याने कृतचूड़स्य दत्तकस्य जनकमात्रपुत्त्रत्वं निषिध्य अन्यत्र पुत्रत्वं यातीत्यत्र चकारेण जनकप्रतिग्रहीतृसाधारण्यं लब्धं

उभयोरेव संस्कारकत्वात् तच्च उभयोरावयोरयं पुत्र इत्यभिसन्धाने सति बोध्यम्। अयमेव द्व्यामुष्यायणो नाम द्विपिता द्विगोत्रश्च ॥२१॥

एवञ्चेति। उपनयनमुख्यकालपर्य्यन्तं ग्रहणाहत्वे च। कृतचूड़स्य द्व्यामुष्यायणदत्तकत्वमेव स्यादित्याह यथैवमित्यादीति। उक्तेति। उक्तवचनानां पितुर्गोत्रेण यः पुत्र इत्यादिवचनानां, परव्याख्याने, अथवा मन्मोक्तव्याख्याने। आवयोर्जनकग्रहीत्रोरित्यर्थः। द्विपितेति। द्वौ पितरौ यस्यासौ द्विपिता इति ॥ २१ ॥

ननु क्षेत्रजस्यैव द्विपितृकत्वं दृश्यते। तथा हारीतः। जीवति क्षेत्रजमाहुरस्मातन्त्रान्मृते द्व्यामुष्यायणं अगुप्तबीजत्वात्॥ जीवत्यपि क्रियाभ्युपगमाद् द्विपितृको भवतीत्याह मनुः। क्रियाभ्युपगमात्त्वेवं बीजार्थं यत् प्रदीयते। तस्येह भागिनौ दिष्टौ बीजी-क्षेत्रिक एव चेति। अपुत्रबीजिक्षेत्रिकयोर्मम त्वत्क्षेत्रे तव बीजं यदपत्यं तदावयोरित्ययं क्रियाभ्युपगमः। तथा; अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः॥ उभयोरप्यसावृक्थी पिण्डदाता च धर्मत इति। दत्तकस्य तु तदृष्टचरं प्रत्युत गोत्र ऋक्थे जनयितुर्न हरेद्दत्रिमः सुतः इति प्रागुक्तमनुवचनं तद्विपरीतार्थग्राहकमेवास्तीति चेन्न दत्तकादिष्वपि, सर्व्वेषामेकधर्म्माणामेकस्यापि यदुच्यते। सर्व्वेषामेव तत्कुर्य्यादेकरूपा हि ते स्मृता इति बौधायनदर्शनेन क्षेत्रजधर्म्मलाभात्। द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगनूद्दिश्य एकपिण्डे वा द्वावनुकीर्त्तयेत् प्रतिग्रहीतारं चोत्पादयितारं आतृतीयात् पुरुषादिति साङ्ख्यायनप्रवराध्याये सामान्यतो दर्शनाच्च दत्तकस्यापि द्विपितृकत्वसिद्धिः॥ २२॥

दत्तकस्य द्विपितृकत्वं नास्तीति मतमुत्थाप्य दूषयति नन्विति। क्षेत्रजस्यैवेति। एवकाराद्दत्तकव्यवच्छेदः। क्षेत्रजमात्रस्य द्विपितृकत्वे प्रमाणं दर्शयति तथेति॥ जीवति

पत्याविति शेषः। अमुष्यापत्यमामुष्यायणः, देवदत्तस्य यज्ञदत्तस्य च द्वयोरामुष्यायणः द्व्यामुष्यायणः। यत्, क्षेत्रमिति शेषः। तस्य तत्क्षेत्रोत्पादितापत्यस्येत्यर्थः। अगुप्त-बीजत्वादिति। गुर्वनुमत्या प्रकाशरूपेणान्येन पुत्रोत्पादनादिति भावः॥ क्रियाभ्युपेति॥ उभयोरेवावयोरयं पुत्रो भविष्यतीत्येवं स्वीकारादित्यर्थः॥ तदद्दष्टचरमिति। तत्-द्विपितृकत्वमदृष्टचरं कुत्रापि वचने प्रागदृष्टमित्यर्थः। दूषयति नेति। दत्तकादिष्वपीति। यथासम्भवदत्तकप्रभृति गौणपुत्रेष्वित्यर्थः॥ एकधर्म्माणामिति। अत्र गौणपुत्रत्वरूप एको धर्मः। द्वे श्राद्धे इति। द्वौ पितरावुद्दिश्येति शेषः। द्वौ जनकग्रहीतारौ इत्यर्थः। तदेवाह प्रतिग्रहीतारं चोत्पादयितारमिति। आवर्तीयादिति। तथाच उभयत्रैव पुरुष-त्रयोल्लेखः कर्त्तव्य इति भावः। सामान्यतो दर्शनादिति। क्षेत्रजत्वादिपुरस्कारेण विशेषादर्शनादित्यर्थः॥ द्विपितृकेति ; द्विपितृकत्वं विना उभयश्राद्धानुपपत्तेरित्यर्थः॥२२॥

**अतएव सत्याषाढ़ोऽपि॥ नित्यद्व्यामुष्यायणानां क्षेत्रजानां स प्रवरगोत्रद्वयसम्बन्धमुक्त्वा दत्तकादीनां द्व्यामुष्यायणवदिति सूत्रेण तद्धर्म्ममतिदिशति॥ विवृतञ्चैतद्भाष्यकारैः॥ नित्यद्व्यामुष्यायणप्रस-ङ्गेनानित्यानाह दत्तकादीनामिति॥ तावदेव नोत्तरसन्ततौ प्रथमे-नैव संस्कारः परिग्रहीत्रा चेत्तदा उत्तरस्य पूर्वत्वात्तेनैव उत्तरत्रेति। एतद्भाष्यार्थस्तु ; क्षेत्रजवदुभयोरभिसन्धौ दत्तकस्योभयगोत्रभागित्वं, अन्यथा जनकेनैव सर्वसंस्कारणे जनकगोत्रभागित्वं न ग्रहीतृगोत्र-भागित्वं ; ग्रहीत्रासंस्कारकरकरणे तु, उत्तरस्य ग्रहीतुः पूर्वत्वात् प्राधान्यात्तेनैव उत्तरसन्ततेर्गोत्रमिति॥२३॥**

अतएवेति॥ दत्तकस्यापि द्व्यामुष्यायणत्वादेव। नित्यानां जन्मग्रहणात् प्रभृत्युभय-सम्बन्धवताम्। क्वचित्तु गोत्रद्वयप्रवरसम्बन्धमिति पाठः, तत्र तच्च द्वयेत्यस्य गोत्रप्रवरे-ष्वुभयत्रान्वय इति मीमांसन्ते॥ तद्धर्म्ममिति। द्विपितृकत्वधर्म्ममित्यर्थः। अतिदिश-तीति। अन्यधर्म्मस्यान्यत्रारोपणमतिदेशः, एतेन क्षेत्रजधर्म्मस्य दत्तकादावतिदेशः। भाष्यकारैः प्रवराध्याय भाष्यकारैः प्रवरस्वामिभिरिति यावत्। नित्यद्व्यामुष्यायण-प्रसङ्गेनेति। उभयोरेवावयोरयं पुत्रो भवत्वित्येवं क्रियाभ्युपगमात् जनितक्षेत्रजप्रसङ्गे-

नेत्यर्थः। तावदेव गोत्रमेव उत्तरसन्ततौ उत्तरस्य सन्तताविल्यर्थः। जनकगोत्रसम्बन्धे किं कारणमित्यत आह प्रथमेनेति। प्रथमो जनकस्तेनैव यदि संस्कारः कृतः। प्रथमेन संस्कारेऽकृते किं स्यादित्यत आह परिग्रहीता चेति। परिग्रहीत्रैव जातकर्म्मादि सर्वसंस्कारकरणे उत्तरस्य परिग्रहीतुरेव गोत्रं, अत्र हेतुः पूर्वत्वात्, संस्कारकरणे प्रथमत्वात्। द्व्यामुष्यायण सन्ततौ दत्तकसन्ततौ चापेक्षितं गोत्रमाह तेनैवेति। परिग्रहीतृगोत्रेणैवेत्यर्थः; एवकारात् जनकगोत्रव्यवच्छेदः। क्षेत्रजवदिति। अपुत्रेण वीजिना उभयोरभिसन्धानेन परक्षेत्रे उत्पादितस्य क्षेत्रजस्य यथा तथेत्यर्थः। अन्यथेति; उभयाभिसन्धिं विनेत्यर्थः॥ २३॥

तथाच पैठीनसिः। अथ दत्तकक्रीतकृत्रिमपुत्रिका पुत्राः परपरिग्रहेणार्षेण येऽत्र जातास्तेऽसङ्गतकुलीना द्व्यामुष्यायणका भवन्तीति। आर्षेण ऋष्युक्तेन परिग्रहेण जनकग्रहीत्रोः स्वीकारेण द्व्यामुष्यायणका भवन्तीत्यर्थः॥ व्यक्तमुक्तम्। द्व्यमुष्यायणका ये स्युः दत्तक्रीतादयः सुताः॥ गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथेति न च दत्तकस्य द्व्यामुष्यायणत्वं न घटते जनकस्यापि तत्र स्वत्वानपायेन माता पिता वा दद्यातामिति दानविध्यनुपपत्तेरिति वाच्यम्॥ सामान्यं सर्वभूतेभ्यो मयोत्सृष्टमिदं जलम्। रमन्तु सर्वभूतानि स्नानपानावगाहनैरित्यादौ स्वमात्रस्वत्वनाशकसर्वभूतोद्देश्यकत्यागादेव नद्यादिवत् साधारणीकृते जले स्वामिनोऽपि उद्देश्यतया स्वत्ववदत्रापि तादृशाभिसन्धिपूर्वकादेव दानात्तादृशदत्तकस्य साधारण्यसिद्धिरित्यास्तां विस्तरः॥ २४॥

दत्तकस्य द्व्यामुष्यायणत्वे वचनमपि दर्शयति पैठीनसिरिति। दत्तकस्य द्विपितृकत्वे पैठीनसिवचनं साधकमुक्ता पारिजातधृतं वचनं स्फुटं साधकमाह व्यक्तमुक्तमिति। गोत्रद्वये जनकगोत्रे प्रतिग्रहीतृगोत्रे च। प्रवरमञ्जर्य्यामप्यनेनैवाभिप्रायेणोक्तं; दत्तकक्रीतकृत्रिमपुत्रिकापुत्रादीनां यथासम्भवं गोत्रद्वयं सप्रवरमस्तीति। दत्तकस्य द्व्यामुष्यायणत्वबाधकं युक्त्यन्तरमप्युत्तोल्य दूषयति न चेति॥ दानविध्यनुपपत्तेरिति॥ तथाच स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पादकत्यागस्यैव दानत्वमर्थकत्वात्, अत्र च स्वामिस्वत्वानपायात्

न दानत्वोपपत्तिरिति भाव: ॥ सामान्यमित्यादीति ॥ तथाच यथा जलाशयोत्सर्गादौ सर्वभूतोद्देश्यकत्यागात् स्वामिन: स्वत्वनाशानन्तरं सर्वभूतानां स्वत्वोत्पत्त्या तत्र स्वामिनोऽपि पुन: स्वत्वोत्पत्ति: स्यात् तथाऽत्रापि उभयोरेवावयोरयं पुत्रो भविष्यतीत्येवमभिसन्धिपूर्वकदानादादौ दातु: स्वत्वनाशस्ततो दातृप्रतिग्रहीत्रोरुभयोरेव स्वत्वोत्पत्तिर्भवेदिति सुधीभिर्बोध्यम् ॥ २४ ॥

अथ दत्तककर्त्तृकश्राद्धनिर्णय: ॥ तत्र पितु: सपिण्डीकरणान्तषोड़शश्राद्धे दत्तकस्य पूर्वंग्रहीतत्वेऽपि सत्यौरसे नाधिकार: ॥ औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते । इति देवलेन ज्येष्ठत्वप्रतिषेधात् ॥ पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे पर:पर इति याज्ञवल्क्यवचनाच्च । अन्यच सर्वत्रौरसवत् । क्षयाहेतुविशेषो यथा जातुकर्ण्य: ॥ औरसक्षेत्रजौ पुत्रौ विधिना पार्वणेन तु । प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश ॥ इतरे दशदत्तकादय: ॥ तथा पराशर: ॥ पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् ॥ सर्वत्रानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनीति । अनेकगोत्राणां द्विगोत्राणां, औरसक्षेत्रजयोरपि साग्न्योरेव पार्वणाधिकार: । पार्वणेन विधानेन देयमग्निमता सदेति जावालमत्स्यपुराणैकवाक्यत्वात् ॥ औरसक्षेत्रजव्यतिरिक्तानान्तु साग्निनिरग्निसाधारणानामेकोद्दिष्टमिति सिद्धम् ॥ २५ ॥

प्रकरणानन्तरमाह अथ दत्तककर्त्तृकश्राद्धनिर्णय इति । औरस इति । पातित्यादिदोषरहिते इति शेष: । ज्येष्ठत्वप्रतिषेधादिति ॥ "मृते पितरि:पुत्रेण क्रिया कार्य्या विधानत: । बहव: स्युर्यदा पुत्रा: पितुरेकत्रवासिन: । सर्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत्कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेदिति मरीचिवचनेन ज्येष्ठस्यैव श्राद्धाधिकारिता प्रतिपादनात्, देवलेन च औरसस्य ज्येष्ठत्वप्रतिपादनात् सत्यौरसे तस्यैव श्राद्धाधिकार: प्रतीयते । तथा, "औरसपुत्रिकाक्षेत्रजगूढ़जकानीन पौनर्भवदत्तक्रीत कृत्रिमस्वयं दत्त सहोढ़ापविद्धान् पुत्रानभिधाय पूर्वाभावे पर: पर इत्यनेन याज्ञवल्क्येनापि औरसाद्यभावे दत्तकादीनामधिकार: प्रतिपादित इति । अन्यत्रेति । क्षयपक्षादावित्यर्थ: ।

प्रत्यब्दं प्रतिसांवत्सरिकश्राद्धम्। दैवतं गतस्य स्मृतस्येत्यर्थः॥ औरसक्षेत्रजयोरपीति। तथाच साग्निकौरसक्षेत्रजाभ्यामेव पार्व्वणेन विधिना श्राद्धं कर्त्तव्यम्; इदमुपलक्षणम्; अमावस्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्व्वणो विधिरित्यनेनामावस्या प्रेतपक्षान्यतरस्मृतमातापितृकनिरग्निभ्यामपि औरसक्षेत्रजाभ्यां पार्व्वणेन विधानेन श्राद्धं कर्त्तव्यमिति॥ २५॥

द्व्यामुष्यायणस्येति कर्त्तव्यतायां विशेषमाह सांख्यायनसूत्रम्॥ पिण्डान् यथावनेजनं निधाय उभावेकस्मिन् पिण्डे पितृभेदे इति पितृभेदे एकस्मिन् पिण्डे उभौ जनकग्रहीतारौ कीर्त्तयेदिति शेषः। प्रवराध्याये, पितृव्येण चैककार्य्यजातास्ते परिग्रहीतुरेव भवन्ति। अथ यद्येषां भार्य्यास्वपत्यं न स्यात् तदा ऋक्‌थं हरेयुः पिण्डं तेभ्यः त्रैपुरुषिकं दद्युः यद्यपि स्यादुभाभ्यामेव दद्युरित्याचार्य्यवचनं द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगनुद्दिश्य एकपिण्डे वा द्वावनुकीर्त्तयेत् प्रतिग्रहीतारं चोत्पादयितारमातृतीयात् पुरुषादिति ग्रहीतुः क्रियानियमाभावे पुत्रान्तराभावे च तस्यैव। क्रियानियमे अपत्यसद्भावे च द्विपितृकत्वमित्यर्थः। अत्र श्राद्धभेदाभेदयोर्विकल्पः। न चेदं क्षेत्रजविषयं सत्याषाढ़ेन दत्तकादीनां द्व्यामुष्यायणवदिति सूत्रेण दत्तकेऽपि तद्धर्म्मातिदेशात्॥ २६॥

पितृभेदे, द्विपितृकत्वे इत्यर्थः। कीर्त्तयेदुल्लिखेदित्यर्थः॥ कल्पान्तरं दर्शयति प्रवराध्याय इति। पितृव्येणेति। एककार्य्याय जाताः स्वमात्रपिण्डादिदानार्थमुत्पादिताः परिगृहीता इति यावत्; ये ते परिग्रहीतुः पितृव्यस्यैव भवन्ति। अत्रैवकाराज्जनकव्यवच्छेदः। अत्र सर्व्वत्र पितृव्यपदमुपलक्षणं, तेन परिग्रहीतृमात्रलाभः॥ एषां पितृव्यानां भार्य्यासु अपत्यं यदि न स्यात्तदा ग्रहीतुः पितृव्यस्यैव; ऋक्‌थं हरेयुः, सर्व्वम् ऋक्‌थं हरेयुः। तेभ्यो ग्रहीत्रादिभ्यस्त्रिभ्यः त्रैपुरुषिकं पिण्डं दद्युः; यद्यपि स्यादेषां स्वासु भार्य्यासु अपत्यं स्यादित्यर्थः। उभाभ्यामेव जनकग्रहीतृभ्यामेव दद्युः। एकपिण्डे

वेति ॥ अत्र पिण्डपदमुपलक्षणम्, तेन सर्वस्मिन्नेवाङ्गे एतज्ज्ञेयम्। आतृतीयात् पुरुषादिति। तृतीयपुरुषपर्य्यन्तमित्यर्थः॥ ग्रहीतुः क्रिया नियमाभाव इति। उभयोरेवावयोरयं पुत्रो भविष्यतीत्येवं क्रियानियमाभावे पुत्रान्तराभावे च तस्यैव ग्रहीतुरेवेत्यर्थः; अन्यथा द्विपितृकत्वमिति भावः। द्व्यामुष्यायणदत्तकस्तु इदानीन्तनाचारापरिग्टहीतः॥ अत्रेति; द्व्यामुष्यायणविषये इत्यर्थः। श्राद्धभेदाभेदयोः पृथक्श्राद्धैकश्राद्धयोः; विकल्पः शक्ताशक्तभेदेन व्यवस्थितः न लैच्छिकः; अष्टदोषग्रासात्, श्राद्धभेदपक्षे इतिकर्त्तव्यताबाहुल्येन तुल्यबलत्वाभावाच्च। अतएव तुल्यबलविरोधे विकल्प इति गौतमेन तुल्यबलविरोध एव इच्छाविकल्प उक्त इति॥ एतद्वचनं क्षेत्रजविषयमेवेति मतमपि दूषयितुमाह न चेति॥ इदं वचनं हि श्राद्धे कुर्य्यादित्यादिकम्। क्षेत्रजविषयमिति क्षेत्रजप्रकरणात्। अत्र द्व्यामुष्यायणवदित्यनेन यथा द्व्यामुष्यायणक्षेत्रजस्य द्विपितृकत्वं तथा दत्तकस्यापीति लभ्यते। तद्धर्म्मातिदेशात् द्व्यामुष्यायणक्षेत्रजधर्म्मातिदेशादित्यर्थः॥ २६॥

तथा हारीतः। तेषामुत्पादयितुः प्रथमं प्रवरो भवति द्वौ द्वौ पिण्डौ निर्वपेत्, एकपिण्डे वा द्वावनुकीर्त्तयेद्द्वितीये पुत्रः तृतीये पौत्रः लेपिनस्त्रीन् वाचयाण आसप्तमादित्येके इति। तेषां पितॄणां मध्ये वीजिनः प्रथममार्षेयं, क्षेत्रिणो द्वितीयमिति द्विप्रवरता॥ एकपिण्डे वेत्यत्र वीप्साऽध्याहारः। यदि द्विपिता स्यादेकैकस्मिन्नेव द्वौ द्वावुपलक्षयेदित्यापस्तम्बवचनात्। द्वितीये पितामहपिण्डे द्व्यामुष्यायणस्य पुत्रः, तृतीये प्रपितामहपिण्डे द्व्यामुष्यायणस्य पौत्र इति। यदि तु ग्रहीता प्रथमं मृतः तदा तस्मै दद्यात्, अथ यदि जनकस्तदा जनकाय यद्युभौ तदादौ जनकाय पश्चाद्ग्रहीत्रे दद्यादित्याह मरीचिः। सगोत्रादन्यगोत्राद्वा यो भवेद्विधवासुतः। पिण्डं श्राद्धविधानञ्च क्षेत्रिणे प्राक् प्रदापयेत्। वीजिने तु ततः पश्चात् क्षेत्री जीवति चेत् क्वचित् वीजिने दद्युरादौ तु मृते पश्चात् प्रदीयते। उभौ यदि मृतौ स्यातां वीजिन्यादौ ततो ददेत्, क्षेत्रिणादौ न दत्तं स्याद्वीजिने नोपतिष्ठते इति। एतेनैकतरोपरतावपि

द्विपितृकस्य पार्वणं दर्शितम्। तथा तुल्यन्यायेन मातृभेदेऽपि द्व्यामुष्यायणदत्तकस्य, पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुव-मित्यनेन प्राप्तमातामहश्राद्धे जननी पितॄणां प्रथमं निर्दिष्टस्ततः प्रतिग्रहीत्री या माता तत् पितॄणाम्। शुद्धदत्तकस्य तु प्रतिग्रहीत्र्या एव मातुः पित्रादिपिण्डदानं तस्य तन्मात्रस्वधाकरत्वादिति। एवञ्च स हि सन्तानाय पूर्वेषामिति हेतुवन्निगदस्वरसान्नैकं पुत्रं दद्यादिति निषेधो द्व्यामुष्यायणातिरिक्तविषयः सन्तानविच्छेदा-भावादित्युक्तमेव॥ २७॥

द्वौ द्वौ पिण्डौ निर्वपेदिति ; जनकग्रहीत्रोरिति शेषः॥ लेपिनस्त्रीन् वृद्धप्रपितामह-प्रभृतीन्। तथाच लेपभाजश्चतुर्थाद्याः पिण्डाद्याः पिण्डभागिनः इत्यनेन वृद्धप्रपितामहादी-नामेव लेपित्वमुक्तम्॥ आसप्तमात् सप्तमपुरुषपर्य्यन्तमनुकीर्त्तयेदिति शेषः। वीप्साध्याहार इति। एतेनैकैकस्मिन्नेव पिण्डे द्वौ द्वावनुकीर्त्तयेदिति लभ्यते। द्वितीये, द्वितीयादौ ; तेन पितामहप्रपितामहपिण्डे इत्यर्थः। द्व्यामुष्यायणस्य पुत्र इति। पितामहप्रपिता-महत्वेनोभयपक्षावनुकीर्त्तयेदिति यावत्। पौत्र इति। प्रपितामहत्वेन उभयपक्षावनु-कीर्त्तयेदित्यर्थः॥ ग्रहीता प्रथमं मृत इति। जनको जीवतीति शेषः॥ आदौ जनका-येति, तस्य प्राधान्यादित्यर्थः॥ सगोत्रादन्यगोत्राद्वेति। नियोगेनेति यावत्। विधवासुत इति। अयं द्व्यामुष्यायणश्चैत्रजः। चैत्रिणे प्रागिति ; आदौ चैत्रिणि मृते इति शेषः। ततः चैत्रिमरणानन्तरं पश्चाद्वीजिनो मरणे इति यावत्, वीजिनेऽपि दद्यात्। यदि क्वचित् कदाचित् चैत्री जीवति तदा आदौ वीजिने दद्यात्। चैत्रिणि मृते पश्चात् चैत्रिणेऽपि प्रदीयते॥ चैत्रिणि जीवीति वीजिनि मृते वीजिने दद्यात्, तथा वीजिनि जीवति चैत्रिणि मृते चैत्रिणे दद्यात्। एतदुपादानन्तु एकस्मिन्नपि मृते तस्य श्राद्ध-करणाभ्यनुज्ञानार्थमेतदेव वक्ष्यति। ननु एकैकमरणे एकैकपक्षश्राद्धकरणमुक्तं, उभय-मरणे तूभयपक्षीयश्राद्धं कर्त्तव्यमित्युक्तं तत्र पौर्व्वापर्य्ये को नियम इत्यत्राह उभौ यदीति। यदि यदा, उभौ मृतौ स्यातां तदा आदौ वीजिने ददेत्, ततः चैत्रिणे ददेत् ; आदौ चैत्रिणि चैत्रिकायेत्यर्थः, न दत्तं स्यान्न देयं स्यात् ; दद्याच्चेत्तदा वीजिने तत्श्राद्धं नोपतिष्ठते॥ एतेनेति ; एकतरोपरतावपि श्राद्धकरणस्य विहितत्वेनेत्यर्थः।

एकतरोपरतावपीति। बीजिनः क्षेत्रिणो वा मरणे इत्यर्थः। तुल्यन्यायेनेति। तुल्ययुक्त्या इत्यर्थः। तथाच यथा द्व्यामुष्यायणेनोभयपितृपक्षीयश्राद्धं कर्त्तव्यं, तथा उभयमातामहपक्षीयश्राद्धमपीति॥ प्रतिग्रहीत्री या माता ग्रहीतुर्भार्य्यारूपा या माता इत्यर्थः। यदि प्रतिग्रहीतुर्बह्व्यो भार्य्याः स्युस्तदा यया सह गृह्णीयात्तत्पितृपक्षीयश्राद्धं कुर्य्यान्न तु यावद्ग्रहीतृभार्य्याणां पितॄणाम्, अन्यथा महाजनविरोधः स्यादिति। हेतुवन्निगदस्वरसादिति। ये हेतुवन्निगदान्ते हिशब्दादिभिर्न तु परमार्थहेतवः। हेतुवन्निगदाधिकरणन्तु सप्तमासतस्त्वादावनुसन्धेयम्; विस्तारभयान्नोद्धृतम्॥ नैकं पुत्रं दद्यादिति निषेध इति। एतेन नैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्व्वेषामित्यत्र एकपुत्रदानस्य प्रसज्य प्रतिषेध एव दानस्य रागप्राप्तत्वात्; ग्रहणपक्षे तु न तथा, तत्र पर्य्युदास एव ग्रहणस्य शास्त्रप्राप्तत्वात्। तथाच मनुः॥ अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनाय चेति। पुत्रदाने तु तादृक् शास्त्रं नास्ति। द्विपुत्रसत्त्वेऽपि अपरपुत्रनाशशङ्कया दानमयुक्तं, तत्र दाने तु दातुः पापं भवति, ग्रहीतुस्तु पुत्रत्वं सिद्ध्यत्येव, तत्र निषेधकशास्त्राभावात्, सामान्यशास्त्रप्राप्त्युपजीवि नञ्पदघटितवाक्यविरहेण प्रतिग्रहस्य पर्य्युदासत्वासम्भवाच्चेति प्रसङ्गादुक्तम्॥ सन्तानविच्छेदाभावादिति। तस्यैकस्यैव उभयोः सन्तानत्वादिति भावः॥ २७॥

अथास्य सापिण्ड्यम्। जनककुले अवयवान्वयेन प्रतिग्रहीतृकुले च पिण्डान्वयेन त्रिपौरुषं, यदाह कार्ष्णाजिनिः। यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः। प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिः सह॥ द्वाभ्यां सहाथ तत्पुत्राः पौत्राश्चैकेन तत्समम्। चतुर्थे पुरुषे छेदस्तस्मादेषां त्रिपौरुषीति॥ अस्यार्थः; दत्तकादयः पुत्राः प्रेतानां प्रतिग्रहीत्रादीनां पुत्राणामौरसत्वे दत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गास्त्रयः षड् वा तावद्भिः सह तेषां योजनं सपिण्डनं कुर्य्युस्तत्र प्रतिग्रहीत्रादीनामौरसत्वे तत्पितृपितामहप्रपितामहास्त्रयः द्व्यामुष्यायणत्वे तज्जनकाद्यास्त्रयः तत्प्रतिग्रहीत्रादयस्त्रय इति षट्। एवञ्च दत्तकस्य स्वकर्त्तृके पार्वणे येषां देवतात्वं स्वपुत्रकर्त्तृके सपिण्डीकरणेऽपि तेषामेव तथात्व-

मिति ज्ञापितम्॥ दत्तकस्य पुत्रास्तु दत्तकसपिण्डीकरणं तत्प्रतिग्रहीत्रा तत्पितॄणां त्रयाणां मध्ये द्वाभ्याञ्च सह कुर्य्युः। एवञ्च दत्तकस्य पौत्रा दत्तकप्रतिग्रहीतृभ्यां ग्रहीतुः पितॄणां त्रयाणां मध्ये एकेन ग्रहीतुः पित्रेति यावत्तेन च समं सह तत् स्वपितृसपिण्डनं कुर्य्युः॥ चतुर्थे पुरुषे च्छेद इति। यो यदा यत् सपिण्डीकरोति स तत् पित्रादिभिस्त्रिभिरेव करोतीति चतुर्थे विरामः सिद्ध एवेति तदारम्भः सिद्धे सत्यारम्भो नियमायेति न्यायेन लेपिनां लेपनिरासेन साविण्ड्यव्यवच्छेदार्थः। तदेवाह तस्मादेषेति। एषा सपिण्डता। तथाच लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां साविण्ड्यं साप्तपौरुषमिति मत्स्यपुराणोक्त साप्तपौरुषसाविण्ड्यस्य सामान्यस्यान्येन विशेषेण बाध एव॥ २८॥

प्रकरणान्तरमाह अथास्य साविण्ड्यमिति। त्रिपौरुषमिति। एतत्तु अशौचाद्यर्थमेवेति बोध्यम्॥ त्रैपुरुषिकसाविण्ड्यं प्रमाणयति कार्ष्णाजिनिरिति। स्वपुत्र कर्तृके दत्तकसपिण्डीकरणे देवतात्वबोधनाय स्वकीयत्वविशेषणोपादानम्। ततश्च प्रतिग्रहीतृ पितॄणां मध्ये त्रयाणां षषां वा दत्तकसपिण्डीकरणे देवतात्वप्राप्तौ विशेषनाह द्वाभ्यामिति। अमुमेव न्यायं दत्तकतत्पुत्रयोरप्यतिदिशति तत्सममिति। तत्सपिण्डीकरणं द्व्यामुष्यायणदत्तकस्य पौत्रा एकेन दत्तकपितामहेन समं सह कुर्य्युः॥ नन्वेवं दत्तकप्रपौत्रेण स्वपितुर्दत्तकपौत्रस्य सपिण्डीकरणे दत्तकपुत्र दत्तक तत्प्रतिग्रहीतृभिस्त्रिभिः सह क्रियमाणे प्रतिग्रहीतृपितॄणां त्रयाणामन्यतमस्याप्यनुप्रवेशाभावेन साविण्ड्यं न स्यादित्यत आह चतुर्थे पुरुषे च्छेद इति। विशेषेणेति। कार्ष्णाजिन्युक्तेनेति यावत्॥२८॥

अतएव हारीतेन। लेपिनस्त्रीन् वाचयाणः आसप्तमादित्येके इति पक्षान्तरमुपन्यस्तं सङ्गच्छते। तदेव संग्रहकारेणोक्तम्। दत्तकानान्तु पुत्राणां साविण्ड्यं स्यात्त्रिपौरुषम्। जनकस्य कुले तद्वद्ग्रहीतुरिति धारणेति। यदिदमुभयत्र त्रिपुरुषसाविण्ड्याभिधानं

तत् द्व्यामुष्यायणाभिप्रायेण तस्य त्रिकद्वयेन सपिण्डनाभिधानात्। शुद्धदत्तकस्य तु गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः। गोत्र-रिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति प्रागुक्तमनुवचने पिण्ड-निवृत्तिदर्शनात् प्रतिग्रहीतृकुल एव सापिण्ड्यमिति। यत्तु वृद्ध-गौतमीयम्॥ सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते। सगोत्रेषु मध्ये कृता अपि दत्तकादयो विधिनैव गोत्रं भजन्ते, परन्तु तेषु सापिण्ड्यं नोत्पद्यते सगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रेषु सुतरां सापिण्ड्यानुत्पत्ति-रिति। तत्तु पुत्रान्तरवत् साप्तपौरुषसापिण्ड्यप्रसक्तौ निषेधकं सापिण्ड्यप्रयुक्तदशाहाशौचादिप्रतिषेधकं वा न तु सामान्यतः सापिण्ड्यनिषेधकमुक्तवचनजातात्॥ २८॥

अतएवेति। त्रैपुरुषिकसापिण्ड्यस्य विधानादेव। त्रिकद्वयेनेति, जनकपक्षे त्रयं प्रतिग्रहीतृपक्षे च त्रयमिति त्रिकद्वयं तेन। प्रतिग्रहीतृपक्षेऽपि सापिण्ड्यविरोधकं वचनं दर्शयति यत्तु वृद्धगौतमीयमिति। सगोत्रेष्वपि सापिण्ड्यानुत्पत्ताविति। एतद्वच-नेन सगोत्रेषु ग्रहणेऽपि सापिण्ड्याभावदर्शनात् परगोत्रेषु सुतरां सापिण्ड्यानुत्पत्तिरिति भावः॥ विरोधं परिहरति तत्त्विति। पुत्रान्तरवत्; औरसपुत्रवत्॥ दशाहाशौचा-दीति। अत्र वाकारःसमुच्चये; तथा च विश्वः॥ "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति॥ उक्तवचनजातादिति। दत्तकानान्तु पुत्राणां सापिण्ड्यं स्यात्त्रिपौरुष-मित्यादिपूर्वोक्तवचनसमूहादित्यर्थः॥ २८॥

अथ दत्तकाशौचनिर्णयः॥ तत्र शुद्धदत्तकस्य तु जनककुले परस्परमशौचं नास्त्येव, गोत्रसापिण्ड्यनिवृत्त्या अशौचनिवृत्तेरर्थ-सिद्धत्वात्। द्व्यामुष्यायणस्य तूभयत्रैवाशौचमिति। ब्रह्मपुराणे॥ दत्तकश्च स्वयन्दत्तः कृत्रिमः क्रीत एव च। अपविद्धाश्च ये पुत्रा भरणीयाः सदैवते। भिन्नगोत्राः पृथक् पिण्डाः पृथग्वंशकराः स्मृताः। जनने मरणे चैव त्र्यहाशौचस्य भागिनः। पराशरः॥

भिन्नगोत्र: सगोत्रो वा नीत: संस्कृत्य चेच्छया। जनने मरणे तस्य त्र्यहाशौचं विधीयते॥ तथा; औरसं वर्ज्जयित्वा तु सर्ववर्णेषु सर्वदा। क्षेत्रजादिषु पुत्रेषु जातेषु च मृतेषु च। अशौचन्तु त्रिरात्रं स्यात् समानमिति निश्चय:॥ सर्वदा उपनयनानन्तरमपि। अत्र सगोत्रस्यापि विधिना जनकगोत्रविच्छित्तिपूर्वकग्रहीतृगोत्रप्राप्त्या-वसगोत्रदत्तकाविशेषात् त्र्यहाशौचमुक्तं युक्तमेव॥ ३०॥

दत्तकसापिण्ड्यं विविच्य प्रसङ्गाद्दत्तकाशौचं निरूपयति अथ दत्तकाशौचनिर्णय इति॥ तत्र दत्तकमध्ये इत्यर्थ:। परस्परमिति। यथा दत्तकमरणे तज्जनकस्य अशौचं न भवति। तथा, जनक तत्सपिण्डादिजननमरणयोर्दत्तकस्याशौचं न भवतीति॥ गोत्रसापिण्ड्यनिवर्त्त्येति। गोत्रऋक्थे जनयितुर्न हरेद्दत्त्रिम: सुत इति वचनादिति शेष:॥ उभयत्रेवेति॥ जनककुले ग्रहीतृकुले चेत्यर्थ:॥ दत्तकप्रभृतीनां जननमरणयो: त्रिपुरुषसपिण्डानां त्र्यहाशौचमाह ब्रह्मपुराण इति॥ जनने मरणे चेत्येतत् यथासम्भवं ज्ञेयम्। तथा चोर्द्ध्वं तनत्रैपुरुषिकसपिण्डानां त्रिरात्रमिति बोध्यम्। सगोत्रात्परि-ग्रहीतस्याऽपि दत्तकस्य त्र्यहाशौचं दर्शयति पराशर इति॥ जनने मरणे चेति। अत्रापि यथासम्भवं ज्ञेयम्॥ अत्र केचित् सपिण्डात्परिग्रहीतस्य दत्तकस्य मरणे सम्पूर्णा-शौचमाहुस्तदसत् सपिण्डात् परिग्रहीतस्याऽपि सगोत्रेषु कृता ये सुर्दत्तक्रीतादय: सुता:। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते इति वृद्धगौतमीयेन साप्तपौरु-षिकसापिण्ड्योत्पत्तिनिषेधात्; भिन्नगोत्र: सगोत्रो वा नीत: संस्कृत्य चेच्छया। जनने मरणे तस्य त्र्यहाशौचं विधीयते इति पराशरवचनेन च त्रिरात्राशौचविधानादिति। त्रिरात्रं स्यादिति। एतत्तूर्द्ध्वं तनत्रैपुरुषिकसपिण्डानामिति बोध्यम्। सर्व्वदा उप-नयनानन्तरमपीति। अत्र उपनयनानन्तरं यत् त्रिरात्राशौचं विहितं तद्वाचनिकम्, उपनयनात् पूर्व्वन्तु औरसपुत्रवद्व्यवस्था। अत्रेति, पराशरवचने इत्यर्थ:। असगोत्र-दत्तकाविशेषादिति। यथा असगोत्रदत्तकस्य जनकगोत्रविच्छित्तिपूर्व्वकप्रतिग्रहीतृ-गोत्रप्राप्ति:, तथा सगोत्रदत्तकस्यापीत्यविशेषादिति भाव:। त्रिपुरुषानन्तरवर्त्तिनां सपिण्डानान्तु पृथगाह मरीचि:। सूतके मृतके चैव त्रिरात्रं परपूर्व्वयो:। एकाहन्तु सपिण्डानां त्रिरात्रं यत्र वै पितुरिति॥ एतेन त्रिपुरुषानन्तरवर्त्तिनामेकाहाशौचं सिद्ध-

मिति मीमांसाकाराः। दत्तकस्त्रीणां तत्पुत्रादीनाञ्च परस्परं सप्तपुरुषपर्य्यन्तं सम्पूर्णाशौचं, तेषां सापिण्ड्य अशौचे च विशेषवचनाभावात्; यथा वचनं हि वाचनिकमिति न्यायेन दत्तकविषयकत्रिरात्राशौचवचनाविषयत्वात्, दत्तकमरणे तु तत्पुत्रपौत्रादीनां सम्पूर्णाशौचमाह वशिष्ठः। दत्तकश्च स्वयन्दत्तः कृत्रिमः क्रीत एव च, जनने मरणे चैव त्र्यहाशौचस्य भागिनः॥ तत्सुताद्या दशाहेन शुद्ध्यन्ति प्रेतसूतके इति। तदयं सङ्क्षेपः। शुद्धदत्तकस्य जनककुले यथासम्भवं जननमरणयोः परस्पराशौचं नास्त्येव। प्रतिग्रहीतृकुले तु दत्तकमरणे ऊर्द्धतनत्रैपुरुषिकसपिण्डानां त्रिरात्रं, तदूर्द्ध्वं दशमपुरुषपर्य्यन्तमेकाहः। सोदकसगोत्रयोः स्नानमात्रम्॥ अन्ये तु सूतके मृतके चैव त्रिरात्रं परपूर्व्वयोः। एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुरिति मरीचिवचनस्य, श्राद्धविवेकस्य दत्तायां क्वचित् पुत्रयोर्द्वयोः पितुर्यत्र त्रिरात्रं स्यादेकं तत्र सपिण्डानामिति ब्रह्मपुराणवचनैकवाक्यतया अन्यपूर्व्वायां भार्य्यायां पूर्व्वभर्तृपरभर्तृत्वादितयोः पुत्रयोर्यथासम्भवं जननमरणयोर्द्वितीयपितुस्त्रिरात्राशौचं, तत्सपिण्डानान्तु एकाहाशौचमित्येतद्विषयकत्वमेव मन्यमानाः दत्तकविषये त्रिपुरुषानन्तरवर्त्तिनां सकुल्यसमानोदकत्वेन त्रिरात्राद्येवाशौचमाहुः। न चैतन्मते सपिण्डसकुल्ययोस्तुल्यवदशौचोत्पत्तेर्विषमशिष्टत्वमिति वाच्यम् सपिण्डाशौचस्य वाचनिकत्वात् दत्तकस्योपनयनपूर्व्वापरकालयोरिव। नापि दत्तकस्य सपिण्डानां सम्पूर्णाशौचाभावात् सकुल्यादीनामशौचं न स्यात् रोगव्यतिरिक्तहेतु मृतस्येवेति वाच्यं तन्नियमस्य वयोविशेषमरणविशेषनिबन्धनत्वेन वाचनिकेतरविषयत्वात्। अतएवोक्तं शुद्धितत्त्वे, यादृग्वयसि यादृङ्मरणे सपिण्डानां सम्पूर्णाशौचं तादृग्वयसि तादृङ्मरणे आचार्य्यादीनां त्रिरात्रादीति॥ दत्तकपुत्रपौत्रस्त्रीप्रभृतिनां दत्तकेन सह दत्तकापत्यादि सप्तमपुरुषपर्य्यन्तसपिण्डैः सह च सम्पूर्णाशौचं, एवं परस्परमपि॥ दत्तकमरणे येषां यादृगशौचं तेषां यथासम्भवं जननमरणयोर्दत्तकस्य तादृगशौचम्; यन्मरणे यदशौचं तन्मरणे तदशौचमसति बाधके इति न्यायात्॥ ३०॥

तथा दत्तके अकृतोद्वाहे पश्चाज्जातस्यौरसस्य विवाहेन परिवेदनदोषः। न वा दत्तकस्याग्रजसोदरात् पूर्वं विवाहकरणे क्षतिः॥ ननु शुद्धदत्तकस्य जनककुले सापिण्ड्यविच्छेदस्य दर्शितत्वेन तत्र

विवाहः प्रसज्येत प्रसज्येत च द्व्यामुष्यायणस्यापि त्रिपुरुषानन्तरितकन्यासन्ततिपरम्परया विवाहः। एवमसपिण्डा च या मातुरसगोत्रा च या पितुः॥ सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने॥ चकारात् पितुरसपिण्डा चेति मनुवचने गृहीतमात्रगोत्रस्याऽपि दत्तकस्य, जनकस्यापि सपिण्डासगोत्रावर्ज्जनाय पितुरिति पदोपादानात्। न च तथापि दत्तकस्य पितुरपि दत्तकत्वे तत्त्रिपुरुषान्तरितकन्यासन्ततेर्विवाहः केन वार्य्यते पितृसापिण्ड्यसगोत्रयोरभावादिति वाच्यम्। यतो विवाहेनैतत् सापिण्ड्यमुपयुज्यते किन्तु सर्वसाधारणं परिभाषितं पितृपक्षे साप्तपौरुषं मातामहपक्षे पाञ्चपौरुषञ्चेति न काप्यनुपपत्तिः॥ तत्प्रपञ्चस्तु तत्र तत्र वक्तव्य इति॥ २१॥

न परिवेदनदोष इति। तथा च दत्तकस्य कुखटत्वात् "कुखटोन्मत्तचौरांश्च परिविन्दन्न दूष्यतीति छन्दोगपरिशिष्टेन कुखटं विहाय विवाहे न दोष इत्युक्तम्। अत्र च खार्त्तेन कुलं परकुलं परगोत्रमटति गच्छति प्राप्नोति यो दत्तकः स कुखट इत्यर्थः कृतः। अतएव कुल्यान्यटतीति परकुलाटनशील इति नारायणमहामहोपाध्यायाः॥ इदमुपलक्षणम्, जनककुले प्रतिग्रहीतृकुले च एनं विहाय कनिष्ठानां विवाहे न परिवेदनदोषः, नापि जनकोत्पादित ज्येष्ठं विहाय दत्तकस्य विवाहे दोषः, तुल्यन्यायादिति बोध्यम्। पितुरिति पदोपादानादिति। तथा च द्व्यामुष्यायणस्य द्विपितृकतया जनकस्याऽपि पितृत्वात् पितृसपिण्डावर्जनेन उभयकुले सपिण्डावर्जनं सिद्ध्यति। अतएव चैत्रमात्रगोत्रस्य द्विपितृकस्य चैत्रनादेर्वीजिसगोत्रावर्जनाय पितुरिति पदोपादानमिति वाक्येन शूलपाणिमहामहोपाध्यायैः चैत्रनादीनां द्विपितृकानामेवोभयकुले सापिण्ड्यवर्जनाय पितुरिति पदस्य सार्थक्यं दर्शितं, शुद्धदत्तकस्य तु एकपितृकत्वात् जनकस्य पितृत्वाभावेन पितृसपिण्डावर्जनेन तत्सपिण्डावर्जनसिद्धिर्विवेच्या॥ ननु दत्तकस्य पितुरपि दत्तकत्वे किं भविष्यतीत्येतन्निरूपणायाह न चेति। विवाहे नैतदिति। एतत्त्रैपुरुषिकसापिण्ड्यं विवाहेनेत्यर्थः॥ २१॥

अथ दत्तकविभागः। तत्र वृहस्पतिः। एक एवौरसः पुत्त्रः पित्रस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्॥ शेषाणां ये तत्रांशभागित्वेन निषिद्धास्तेषाम् आनृशंस्यं दया, प्रजीवनं भरणम्। तथा यमः। पुत्रास्तु द्वादशप्रोक्ता मुनिभिस्तत्त्वदर्शिभिः। तेषां षड्बन्धुदायादाः। षड़दायादबान्धवाः॥ स्वयमुत्पादितस्त्वेको द्वितीयः क्षेत्रजः स्मृतः। तृतीयः पुत्त्रिका पुत्रो जातिधर्म्मविदो विदुः। पौनर्भवश्चतुर्थस्तु कानीनः पञ्चमः स्मृत। गृहे च गूढ़ उत्पन्नः षड़ेते पिण्डदायिनः। अपविद्धः सहोढ़श्च दत्तः कृत्रिम एव च। क्रीतश्च पञ्चमः पुत्रो यश्चोपनयते स्वयम्। इत्येते सङ्करोत्पन्नाः प्रड़दायादबान्धवाः। नारदः। औरसः क्षेत्रजश्चैव पुत्रिका पुत्र एव च। कानीनश्च सहोढ़श्च गूढ़ोत्पन्नस्तथैव च। पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा॥ स्वयञ्चोपागतः पुत्रा द्वादशैते प्रकीर्त्तिताः। तेषां षड्बन्धुदायादाः षड़दायादबान्धवाः। पूर्वः पूर्वः स्मृतो ज्येष्ठो जघन्यो यो य उत्तरः॥ क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने॥ ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात्। पूर्वपूर्वाभावे उत्तरोत्तरेषां द्रविणार्हत्वमित्यर्थः। औरसक्षेत्रजपुत्रिका पुत्र पौनर्भवकानीनगूढ़ोत्पन्नसहोढ़दत्तकक्रीत-स्वयमुपागतापविद्ध यत्र क्वचनोत्पादितानभिधाय विष्णुः। तेषां पूर्वः पूर्वः श्रेयान् स एव दायहरः स चान्यान् विभृयात्॥ औरसपुत्रिका पुत्रक्षेत्रजगूढ़जकानीनपौनर्भवदत्तकक्रीतकृत्रिमः स्वयन्दत्तसहोढ़ापविद्धानभिधाय याज्ञवल्क्यः। पिण्डदोऽंशहरश्चैषां पूर्वाभावे परः परः॥ ३२॥

तत्रेति। दत्तकविभागविषये इत्यर्थः। वृहस्पतिः। आह इति शेषः। एकः केवल इत्यर्थः; तथा च "एके मुख्यान्य केवला इति। औरसो मुख्य इति शेषः॥

प्राक्कल्युक्तदत्तकविधिरिति प्रतिज्ञायाः कृतत्वात् कलौ च गौणौरसपुत्रोत्पादनासम्भवात्। औरसस्तु त्रिविधः। तत्र सवर्णायां संस्कृतायां स्वयमुत्पादितो मुख्यः। संस्कृतायां स्वयमुत्पादितो मध्यमः। असंस्कृतायां स्वयमुत्पादितोऽधमः। कलौ असवर्णा विवाह-निषेधे वृहन्नारदीयम्। द्विजानामसवर्णासु कन्यासूपयमस्तथेत्याद्यभिधाय इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः इत्याह। एकः औरस इत्यर्थः। षडेते पिण्डदायिनः इति॥ अत्र पिण्डदायिन इत्यनेन विभागार्हत्वञ्चैषां व्यज्यते। क्रमादेते इति। पूर्व्व-पूर्व्वाभावे इत्यर्थः। एतत्तु सम्पूर्णधनाधिकारित्वपरत्वेनोक्तम्। तद्धने पितुर्धने, प्रवर्त्तन्ते पितृधनाधिकारिणो भवन्तीत्यर्थः। यत्र क्वचनोत्पादितेति। शूद्रापुत्र इत्यर्थः। अन्यान् भ्रातॄनिति शेषः; विभयात् पालयेत्॥ ३२॥

मनुः। न भ्रातरो न पितरः पुत्रा ऋक्थ हराः पितुः। तथा, श्रेयसः श्रेयसोऽभावे यवीयान् ऋक्थमर्हति। बहवश्चेत्तु सदृशाः सर्वे ऋक्थस्य भागिनः॥ सदृशा गुणेन औरसक्षेत्रजत्वाद्युपाधिना वा। श्रेयसः औरसादेः। यवीयान् न्यूनः क्षेत्रजादिरित्यर्थः॥ तथा, औरसक्षेत्रजौ पुत्रौ पितृऋक्थस्य भागिनौ। दशापरे च क्रमशः पितृऋक्थांशभागिनः॥ दशदत्तकादयः। हारीतः। स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः पुत्रिकापुत्रो गूढ़ोत्पन्नश्चेति बन्धु-दायादाः। दत्तः क्रीतोऽपविद्धः सहोढ़ः स्वयमुपागतः सहसा दृष्ट-श्चेत्यबन्धुदायादाः। मनुः। पुत्रान् द्वादशयानाहुर्नृणां स्वाय-म्भुवो मनुः। तेषां षड्बन्धुदायादाः षड्दायादबान्धवाः। औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढ़ोत्पन्नोऽपविद्धश्च दायादा बान्ध-वास्तु षट्। कानीनश्च सहोढ़श्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च शौद्रश्च षड्दायादबान्धवाः। बौधायनः। औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ। गूढ़ञ्चैवापविद्धञ्च रिक्थभाजः प्रचक्षते। एतच्च कानीनादीनां गोत्रमात्रभागित्वकथनमौरसादीनां मध्ये कस्यापि सम्भवेऽंशहरत्वप्रतिषेधार्थम्। सहोढ़दत्तकक्रीतस्वयमुपागताप-

विद्धगौढ़ानभिधाय औरसादीन् परामृश्य पुनर्वशिष्ठः॥ यस्य तु सर्वेषां वर्णानां न कश्चिद्दायादः स्यादेते तस्य भागं हरेयुः॥ ३३॥

भागिनः तुल्यभागिन इत्यर्थः। गुणसादृश्येऽपि विभागवैलक्षण्यदर्शनादाह औरसक्षेत्रजत्वाद्युपाधिना वेति॥ एतेन यत्र एकजातीया बहव औरसाः क्षेत्रजादयो वा वर्त्तन्ते तत्र समभागिनो भवन्तीत्यवगम्यते॥ सहसा दृष्टः शूद्रापुत्र इत्यर्थः। एतेषु वचनेषु यत् पुत्राणां द्वादशविधत्वमुक्तं, तत् कस्मिंश्चिद्वचने गौढ़मनन्तर्भाव्य क्वचित् पुत्रिकां क्वचित् कृत्रिममिति; अतः सर्ववचनैकवाक्यतया षड्दृष्टमिति बोध्यम्। एतेषु यमनारदविष्णुयाज्ञवल्क्यहारीतादिवचनेषु दत्तकपुत्रस्य क्षेत्रजादिसत्त्वेऽबन्धु-दायादत्वमभिहितम्। सम्प्रति क्षेत्रजादिसत्त्वेऽपि दत्तकस्य बन्धुदायादत्वाद्यभिधायु-मादौ प्रमाणमुपन्यस्यति मनुरिति। यद्यपि मनुक्तगणनायां पुत्रिकाया उल्लेखो नास्ति तथापि पत्रिकाया औरससमभागित्वेन विभागवचने औरसोल्लेखेनैव पुत्रिकोल्लेखो अर्थात् सिद्ध्यति। निषादं शूद्रापुत्रमित्यर्थः। अंशहरत्वप्रतिषेधार्थमिति; अन्यथा ग्रासमात्रभागित्व कथनवैफल्यापत्तेः। न कश्चिद्दायाद इति। पूर्वाधिकारित्वेन प्रसिद्ध इति यावत्। एते सहोढ़ादयः॥ ३३॥

औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढ़ोत्पन्नापविद्धसहोढ़पौनर्भव-दत्तकस्वयमुपागतकृतकक्रीतानभिधाय देवलः॥ एते द्वादशपुत्रास्तु सन्तत्यर्थमुदाहृताः। आत्मजाः परजाश्चैव लब्धा याद्दच्छिकास्तथा। तेषां षड् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट्। विशेषश्चापि पुत्राणा-मानुपूर्व्या विशिष्यते। सर्वे ह्यनौरसस्यैते पुत्रादाय हराः स्मृताः॥ औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते। तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः। हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः॥ कात्यायनः॥ उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः। सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः॥ चतुर्थांशहराः स्मृता इति द्वितीयचरणे क्वचित् पाठः। वशिष्ठः। तस्मिंश्चेत् प्रतिगृहीते

औरस उत्पद्यते स चतुर्थभागभागी यदि नाभ्युदयिकेषु प्रयुक्तं स्यात्। स प्रतिगृहीतपुत्रः आभ्युदयिकेषु यज्ञादिषु यदि औरसेन प्रयुक्तं न स्यात् प्रभूतं धनमिति शेषः॥ ३४॥

औरसपुत्रिकेत्यादीति। अत्र देवलेन यद् द्वादशविधत्वमुक्तं तदत्यन्तापकृष्टत्वात् पारशवमनन्तर्भाव्येवेति बोध्यम्॥ औरसादीन् पुत्रानाह याज्ञवल्क्यः॥ औरसो धर्म-पत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। गृहे प्रच्छन्न उत्पन्नो गूढ़जस्तु सुतः स्मृतः। कानीनः कन्यकाजातो मातामहसुतः स्मृतः॥ अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः। दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्॥ क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः। दत्तात्मा तु स्वयं दत्तो गर्भविन्नः सहोढ़जः॥ उत्सृष्टो गृह्यते यस्तु सोऽपविद्ध सुतो भवेत्। औरसो जात औरसः। धर्मपत्नी धर्मविवाहोढ़ा। औरसस्तु सवर्णः न त्वसवर्णः। सवर्णायां संस्कृतायां स्वय-मुत्पादितमौरसं विद्यादिति बौधायनोक्तेः। सावर्ण्यन्तु द्विजातित्वेन न तु ब्राह्मण-त्वादिना; अन्यथा ब्राह्मणेन विवाहितयोः क्षत्रियवैश्ययोः स्वयमुत्पादितस्यौरसत्वा-भावात् पुत्रान्तरेष्वनन्तर्भावाच्च तस्य पुत्रत्वाभावः प्रसङ्गः स्यादिति। अतएव शूद्रामात्र-त्यागाय सवर्णाग्रहणमिति पारिजात इति रुद्रधरः। अन्यत्र तु सवर्णत्वं ब्राह्मणत्वादि-नैव, अनुपपत्त्यभावादिति गुरुचरणाः। पुत्रिकैव सुतः पुत्रिकासुतः। पुत्रिका च चतुर्विधाः। तथा च गौतमः। पितोत्सृजेत् पुत्रिकामनपत्योऽग्निं प्रजापतिञ्चेष्ट्वा अस्मदर्थमपत्यमित्यभिसन्धिमात्रात् पुत्रिकेत्येकेषामिति॥ अस्मदर्थं पुत्रिकेत्युक्त्वा पिता वरायोत्सृजेदित्यर्थः। ब्रह्मपुराणे॥ अपुत्रेण तु या कन्या मनसा पुत्रवत् कृता। राजाग्निबान्धवेभ्यश्च समक्षं वाथ कुत्रचित्। आगमंमथवा शुल्कमुक्त्वा दत्ता वराय वा। मृते पितरि वा दत्ता सा विज्ञेया तु पुत्रिका इति॥ आगमंशुल्कमुक्त्वा स्वयं दत्तेति मिश्राः। क्षेत्रजमाह मनुः। यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा। स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः॥ सगोत्रेणेति सपिण्डेनोत्तमवर्णेनान्येन वोत्पादित इति श्राद्धचिन्तामणिः॥ गृहे; भर्तृगृहे। प्रच्छन्नः कस्मात् पुरुषादुत्पन्न इति विशेषतो-ऽपरिज्ञातः। जनकस्य सजातीयत्वनिर्णयस्त्वावश्यक एव। सजातीयेष्वयं प्रोक्तस्तन-येषु मया विधिरिति याज्ञवल्कीयात्। एवमेव मिताक्षरा मनुटीकास्वेवम्। गूढ़ज-

स्त्विति, क्षेत्रिण इति यावत्; तथाच मनुः। उत्पाद्यते गृहे यस्तु न च ज्ञायेत कस्य सः। स गृहे गूढ़ उत्पन्नस्तस्य स्याद्‌ यस्य तल्पजः इति। कानीन इति। तथाच वशिष्ठः। यं पितृगृहे असंस्कृता कामादुत्पादयेत् स कानीनो मातामहपुत्रो भवतीति॥ सा कन्या चेदनन्तरमपुत्राय ददाति तदा कन्यावस्थोत्पन्न पुत्र उभयोरेव, पारिजातोऽप्येवमिति मिश्राः॥ तथाचापुत्रपरिणेतृविषयकं ब्रह्मपुराणवचनम्। अदत्तायान्तु यो जातः सवर्णेन पितुर्गृहे। स कानीनसुतस्तस्य यस्मै सा दीयते पुनरिति। पौनर्भव इति। तथाच कात्यायनः। क्लीवं विहाय पतितं या पुनर्भजते पतिम्। तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः। मनुश्च। या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया। उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते। दत्तात्मेति। दत्त आत्मा येन सः; तथाच मनुः। मातापितृविहीनो यस्त्यक्तो वास्यादकारणात्। आत्मानं स्पर्शयेद्‌ यस्मै स्वयं दत्तस्तु स स्मृतः॥ अपविद्ध इति। तथाच वशिष्ठः। अपविद्धस्तैकादश स मातापितृभ्यां त्यक्तो येन गृहीतस्तस्येति॥ ३४॥

अत्र नानाविधमुनिवचनानां परस्परविरोधपरिहारार्थमेवं व्याख्यायते। वृहस्पतिवचने औरसमात्रस्य धनभागित्वकथनमन्येषां भरणमात्रकथनञ्च असवर्णक्षेत्रजदत्तकादिविषयम्। देवलकात्यायनवचनैकवाक्यत्वात्, नारदादिवचनेषु च औरसाद्यभावे क्षेत्रजदत्तकादीनामेकैकग्रहणविधिरपि सर्वधनग्रहणविषयः। अतश्च दत्तकग्रहणानन्तरमौरसोत्पत्तौ तदौरस चतुर्थांशविधिर्वशिष्ठोक्तो दत्तकविषये ज्ञेयः। तथा देवलकात्यायनवचने तृतीयांशग्रहणविधिरत्युत्कृष्टगुणदत्तकविषयो वाच्यः। उपपन्नो गुणैः सर्वैः पुत्रो यस्य हि दत्रिमः। स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रत इति मनुवचनैकवाक्यत्वात्। गुणैर्ज्जातिविद्याचारैः॥ समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः। त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुत इति ब्रह्मपुराणदर्शनात् क्षेत्रजविषय इत्यन्ये। तथा केनापि मुनिना दत्तकस्य बन्धुदायादत्वमन्येन चाबन्धुदायादत्व-

मुक्तं तद्गुणवदगुणभेदेन समाधेयम्। पितुरिव बन्धूनां सपिण्डानामपि दायहरत्वाद्बन्धुदायादत्वं पितृमात्रदायहरत्वादबन्धुदायादत्वं, तेषां षड्‌बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् इत्यत्र पितुरेवेत्येवकारश्रवणात्॥ ३५॥

तदस्तु प्रकृतमनुसरामः। अत्रेति। दत्तकविभागविषये इत्यर्थः। परस्परविरोधपरिहारार्थमिति। तथाच कैश्चिद्दत्तकादीनां बन्धुदायादत्वमंशभागित्वञ्च विहितं कैश्चिन्न विहितमित्येतद्विरोधपरिहारार्थमित्यर्थः। बृहस्पतिवचने इति। एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनमित्यत्रेति यावत्। देवलकात्यायनवचनैकवाक्यत्वादिति। देवलवचनन्तु, हीनास्तमुपजीवेयुर्ग्रासाच्छादनभागिन इति। कात्यायनवचनन्तु, उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः। सवर्णा असवर्णास्तु ग्रासाच्छादनभागिन इति। अतश्चेति। सर्व्वधनग्रहणविषयत्वाच्च। वशिष्ठोक्त इति। तस्मिंश्चेत् प्रतिगृहीते औरस उत्पद्यते, स चतुर्थभागभागी यदि नाभ्युदयिकेषु प्रयुक्तं स्यादिति वशिष्ठोक्त इत्यर्थः। गुणागुणभेदेनेति। तथाच गुणवान् दत्तको बन्धुदायादो निर्गुणस्तु न बन्धुदायाद इति भावः॥ ३५॥

एवं दत्तकस्य धनग्रहणादौ मुनिभेदेन पूर्व्वापरोक्तिवैषम्यं गुणागुणविवेकेनापास्तम्; एतेनौरसस्य भ्रात्रादिधने येनैव भ्रातृत्वादिना सम्बन्धेनाधिकारित्वं तादृशेनैव सम्बन्धेन तादृशदत्तकस्यापि यथासम्भवमुचितांशभागित्वमवधेयम्॥ एवं धनिनः पुत्रान्तरसत्त्वे मृतपितृकस्य दत्तकपौत्रस्यापि दत्तोचितांशभागित्वं तदसत्त्वे सर्व्वहरत्वमपीति। न च पौत्रस्य स्वपितृयोग्यांशभागित्वनियमात् दत्तकस्य ग्रहीतुः पितामहौरसत्वे तादृशपितृव्यतुल्यस्यैवांशस्य तद्योग्यत्वाद्दत्तकपौत्रः पितृव्यतुल्यमेवांशं लभतामिति वाच्यम्। पुत्रस्य दत्तकत्वे चतुर्थांश इति वैषम्यात्। ततश्च स्वसमानरूपस्य पितुर्यादृशांशः शास्त्रसिद्धस्तस्यैव स्वपितृयोग्यांशतेति यथोक्तमेव साधु। एवंरीतिः प्रपौत्रेऽप्यनुसर्त्तव्येति॥ ३६॥

गुणागुणविवेकेनेति॥ तथाच येन पूर्व्वषट्कमध्ये परिभाषितं तत् सगुणाभिप्रायेण, येन परषट्कमध्येऽभिहितं तन्निर्गुणाभिप्रायेण॥ अपास्तमवगन्तव्यमित्यर्थः। एतेनेति। गुणागुणविवेकेनाधिकारित्वानधिकारित्वनिर्णयेन। येनैव भ्रातृत्वादिनेति। एतेन संसृष्टत्वासंसृष्टत्वादिभेदेन दत्तकेऽपि व्यवस्था भविष्यतीति बोध्यम्। भ्रातृपर्य्यन्तराहित-भ्रातृधने औरसवत् दत्तकस्याऽपि व्यवस्था भविष्यतीति च बोध्यम्। उचितांशभागित्व-मिति। तथाच गुणवदगुणभेदादिना तृतीयांशादिहरत्वमित्यवधेयम्। धनिनः दत्तक-पितामहस्य पुत्रान्तरसत्त्वे दत्तकपितृव्यान्तरसत्त्वे दत्तकपौत्रस्य, दत्तकरूपधनिपौत्रस्य; तत्तोचितांशभागित्वमिति। तथाच धनिनः दत्तकपुत्रस्य यथा तृतीयांशादिहरत्वं तथा दत्तकपौत्रस्यापीति भावः॥ ननु पितुर्यादृशोऽंशः शास्त्रसिद्धः पुत्रस्यापि तथा भवि-ष्यति अत औरसस्य दत्तकपितुः सम्पूर्णांशभागित्वे कथं तद्दत्तकपुत्रस्य तृतीयांशादिहरत्व-मित्युक्तोक्त्य दूषयति न चेत्यादि। दत्तकस्य ग्रहीतुर्दत्तकपितुरित्यर्थः। पितामहौरसत्वे, दत्तकस्य पितामहौरसत्वे, तथाच दत्तकपितुरौरसत्वे इत्यर्थः। तादृशपितृव्यतुल्यस्यैव अंशस्य सम्पूर्णांशस्येत्यर्थः। तद्योग्यत्वात्, दत्तकपितृयोग्यत्वात्। दत्तकपौत्रः दत्तक-रूपी पौत्रः; पितृव्यतुल्यमेवांशं सम्पूर्णांशम्। वैषम्यादिति। तथाच यत्र पितुर्दत्तकत्वे तस्य तृतीयांशादिहरत्वं तत्र पुत्रस्य दत्तकत्वे सम्पूर्णांशहरत्वमिति वैषम्यादित्यर्थः। ततश्चेति वैषम्याच्चेत्यर्थः। तस्यैव स्वपितृयोग्यांशतेति। तथाच स्वसन्तानरूपस्य दत्तक-रूपस्य पितुर्यादृशोऽंशः शास्त्रसिद्धः तादृशोऽंश एव स्वपितृयोग्यांशस्यैव दत्तकरूपपौत्रः गृह्णीयादित्यर्थः। एवं रीतिः पौत्रवन्नियमः॥ ३६॥

ननु क्षेत्रजदत्तकादीनां सामान्यधनाधिकारित्वेऽपि राज्ये-ऽनधिकारः श्रूयते। यथा औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोपविद्धश्च भागार्हास्तनया इमे। कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च दासश्च षडिमे पुत्त्रपांशुलाः। अभावे पूर्वपूर्वेषां परान् समभिषेचयेत्। पौनर्भवं स्वयन्दत्तं दासं राज्ये न योजयेत्। तथा, न क्षेत्रजादींस्तनयान् राजा राज्येऽभि-षेचयेत्। पितृणां साधयेन्नित्यमौरसे तनये सतीति। उच्यते। शास्त्रान्तरसद्भावे विशेषशास्त्रस्य सामान्यपरत्वमेव लाघवात्। अत-

एव पूर्वंपूर्वाभावे परपराधिकारबोधकं हि पूर्ववाक्यं प्रागुक्तनारदादिवचनैकवाक्यतया समग्रराज्यमेव विषयीकरोतीति, परवचनञ्च सत्यौरसे चेत्रजदत्तकादीनां समानांशनिषेधकम्, असवर्णचेत्रजदत्तकादिविषयं वा। अन्यथा वाक्यभेदे गौरवम्। तत्स्वीकारेऽपि नानेन वचनेन चेत्रजदत्तकादीनां सत्यौरसे स्वस्वोचितांशो निषिध्यते, किन्त्वौरससत्त्वे तेषामभिषेकं निषिध्य औरसस्य राज्येऽभिषेको विधीयते; तथाच चेत्रजदत्तकादयः सामान्यशास्त्रप्राप्तमंशं लभन्त एव तत् सङ्कोचकाभावात्॥ न चैतदेव वचनं बाधकं भिन्नविषयत्वात्। अतएव भागार्हास्तनया इमे इत्यनेन पूर्ववचने भागार्हत्वं स्पष्टीकृतम्। आज्यातिरिक्तस्य भाग इति न शक्यते वक्तुं राज्यस्यैव तत्रोपस्थितत्वात्। पौनर्भवादीनान्तु पूर्वपूर्वाभावेऽपि राज्यनियोजनाभावः पृथगभिधानसामर्थ्यादिति॥ ३७॥

पुत्रपांशवाः, पुत्राधमा इत्यर्थः। पांशून् पापानि खान्ति गच्छन्तीति व्युत्पत्तेः समभिषेचयेत् राज्ये इति शेषः। नित्यं नित्यश्राद्धम्। विरोधं परिहरति उच्यते इति। शास्त्रान्तरसद्भावे इति। शास्त्रान्तरन्तु अभावे पूर्वपूर्वेषां परान् समभिषेचयेदिति। विशेषशास्त्रस्य न चेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेदित्यस्य; सामान्यपरत्वमेव सामान्यशास्त्रपरत्वमेव, "अभावे पूर्वपूर्वेषामित्येतत्परत्वमेव लाघवात्; लाघवन्तु ऐकवाक्यमन्यथा वाक्यभेदः स्यात्। अतएवेति। विशेषशास्त्रस्य सामान्यपरत्वादेव। पूर्ववाक्यं, अभावे पूर्वपूर्वेषामिति वाक्यम्। प्रागुक्तनारदादीति॥ नारदवचनन्तु, औरसः चेत्रजश्चैवेत्यादि, तेषां षड्बन्धुदायादाः षड़दायादबान्धवाः॥ पूर्वः पूर्वः स्मृतो ज्येष्ठो जघन्यो यो य उत्तरः॥ क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने। ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयादित्यन्तानि। परवचनन्त्विति। न चेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेदित्यादिकम्। असवर्णेति। तथाचासवर्णचेत्रजादयोऽशं न प्राप्नुयुरित्यर्थः॥ अन्यथेति। असवर्णचेत्रजदत्तकादिविषयत्वास्वीकारे इत्यर्थः॥ वाक्यभेदे गौरवमिति। असत्यौरसे धनं गृह्णीयात् सत्यौरसे तृतीयांशादिकं गृह्णीयादिति वाक्यभेदात् गौरवं स्यादित्यर्थः॥ तत्स्वीकारे-

ऽपीति। दत्तकादीनां राज्येऽनभिषेकस्वीकारेऽपि। अनेन वचनेन, औरसक्षेत्रजयेवे-त्यादिवचनेनेत्यर्थः॥ न चैतदेव वचनं बाधकमिति। दत्तकादीनामंशप्राप्तिबाधकमेतद्वचनं न, इत्यर्थः अत्र हेतुमाह भिन्नविषयत्वादिति, अभिषेकनिषेधविषयत्वादित्यर्थः। अत-एवेति। दत्तकादीनामंशप्राप्तियोग्यत्वादित्यर्थः। उपस्थितत्वादिति। दासं राज्ये न योजयेदित्यत्र राज्यपदोल्लेखात्। पृथगभिधानसामर्थ्यादिति। न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेदिति वक्ष्यमाणेऽपि पौनर्भवं स्वयन्दत्तं दासं राज्ये न योजयेदिति पृथगभिधानादिति भावः॥ ३७॥

एतावता प्रबन्धेनाभिहितोऽयं क्षेत्रजदत्तकादीनामौरसेन सह विभागप्रकारः स तु शूद्रस्य न सम्भवति तस्य तु दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत्। सोऽनुज्ञातो हरेदंशमिति धर्म्मो व्यवस्थित इति मनुवचनेन, जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत्। मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम्। अभ्रातृको हरेत् सर्वं दुहितॄणां सुतादृते इति याज्ञवल्कीयेन च दासीपुत्त्रस्याप्यौरसेन समांशाभिधानेन पितुरनन्तरं भ्रातृरहितस्य तस्यैव दौहित्रेण सह विभागदर्शनेन च दण्डापूपायितः सति पितरि क्षेत्रजदत्तकादीनामौरसेन समांशः असति तु तदर्द्धांशः। अन्यथा यत्र च क्षेत्रजदत्तकादीनामौरस चतुर्थांशभागित्वं तत्र तदपेक्षया अत्यन्तविप्रकृष्टस्य दासीपुत्त्रस्यौरससमांशित्वमिति महद्वैषम्यं स्यात्, एवं सत्सु क्षेत्रजादिषु सत्योश्च पत्नीकन्ययोर्दौहित्राधिकारे क्लृप्ताधिकारविधिबाधापत्तिः। तेन दौहित्रपर्य्यन्ताधिकारिशृङ्खलायां तदेकतमे सत्यपि न दासीपुत्त्रस्य सर्वहरत्वं किन्तु तत्समांशः॥ ३८॥

एतावता प्रबन्धेनेति। अथ दत्तकविभागस्तत्र बृहस्पतिरित्यादि पृथगभिधान-सामर्थ्यादित्यन्तग्रन्थेनेत्यर्थः॥ क्षेत्रजदत्तकादीनां पुत्रिकेतरगौणपुत्त्राणामौरसेन सह अयमेतद्रूपो विभागप्रकारः तृतीयचतुर्थांशादिरूपः अभिहितः उक्तः, स तु तादृश-विभागस्तु इत्यर्थः॥ शूद्रस्य तादृशविभागाभावे प्रमाणं दर्शयति दास्यां वेत्यादि। दासीपुत्त्रस्याप्यौरसेन समांशाभिधानेनेति॥ तथा च यतो दासीपुत्त्रस्यापि औरसेन

सह समांशित्वमतो दत्तकादीनामौरसेन सह समांशित्वं निर्विवादमिति भावः॥ दण्डापूपायित इति। स च न्यायो यथा, यत्रैकत्र स्थापितयोर्दण्डापूपयोरपूपो नास्ति दण्डस्तु मूषिकेण भक्षितस्तत्र मूषिकस्य दुष्करदण्डभक्षणसिद्धौ अपूपभक्षणमपि अर्थादायातं भवतीति। अन्यथेति शूद्रस्यापि चतुर्थांशादिप्राप्तिस्वीकारे इत्यर्थः। महद्वैषम्यं स्यादिति। दासीपुत्रापेक्षया दत्तकादीनां न्यूनभागप्राप्तेरिति भावः। दोषान्तरमाह एवमिति॥ क्लृप्ताधिकारविधिबाधापत्तिरिति। दौहित्रात् पूर्वाधिकारित्वेन क्लृप्तः कन्यापुत्रादि-विषयो योऽधिकारविधिस्तद्बाधापत्तिरित्यर्थः॥ तेनेति, क्लृप्ताधिकारविधिबाधापत्तित इत्यर्थः॥ ३८॥

अतएव दत्तपुत्रे तथाजाते कदाचिदौरसो भवेत्। पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ इत्यपि वचनं शूद्रविषय एव योज-नीयम्। तथा, शूद्रस्य तु सवर्णैव नान्या भार्य्योपदिश्यते। तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत्; इत्यत्र वचने शूद्राणां भार्य्योत्पन्नानां सर्वेषां समांशमभिधाय पुनर्यदि पुत्रशतमित्यनेन पुत्रान्तराणामपि समांशता प्रतिपादिता। औरसमात्रपरत्वे पूर्वेणैतत् प्राप्त्या पुनरेतदभिधानं व्यर्थं स्यात्॥ द्व्यामुष्यायणदत्त-कस्य तु जनकप्रतिग्रहीत्रोरुभयोरपुत्रत्वे सर्वरिक्थहरत्वं सत्यौरसे गृहीतस्य तु नांशहरत्वं ग्रहणानन्तरमौरसोत्पत्तौ तु जनककुले तदौरसार्द्धहरत्वं ग्रहीतुरसाधारणदत्तकस्य याद्वशोऽंशः शास्त्रीयः तदर्द्धहरत्वञ्चेति। यदाह प्रवराध्यायः॥ यद्येषां स्वासु भार्य्यासु अपत्यं न स्यात्तदा ऋक्थं हरेयुरिति। तथा नारदः। द्व्यामु-ष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक्। विक्थादर्द्धांशमादद्यु-र्वीजिक्षेत्रिकयोस्तथेति। वीजिक्षेत्रिकपदयोर्जनकप्रतिग्रहीत्रुभयोप-लक्षणत्वं प्रागेवाभिहितम्॥ ३९॥

अतएवेति। शूद्रस्य सम्पूर्णांशहारित्वादेव। दत्तपुत्रे तथा जाते इति। दत्तपुत्र-ग्रहणानन्तरमित्यर्थः॥ नान्येति। अन्या ब्राह्मण्यादिका। यदि पुत्रशतं भवेदिति। यदि

दत्तकादिपुत्रान्तरं स्यात्। पूर्वेण, तस्यां जाता: समांशा: स्युरित्यनेन; एतत् प्राप्त्या, समांशित्वप्राप्त्या; एतदभिधानं यदि पुत्रमतं भवेदित्यभिधानम्॥ द्व्यामुष्यायणदत्तके विशेषमाह द्व्यामुष्यायणेति। अपुत्रत्वे, दत्तकेतरपुत्रान्तरासत्त्वे इत्यर्थः॥ सर्वं रिक्थहरत्वं दातृप्रतिग्रहीत्रोरुभयोरिति यावत्। तदौरसार्द्धहरत्वमिति। तदौरसस्य जनकस्यौरसपुत्रस्य अर्द्धहरत्वं तृतीयांशहरत्वमित्यर्थः। तथाहि, यत्रौरस एकमुद्रां प्राप्नोति तत्र यदि द्व्यामुष्यायणदत्तक: औरसप्राप्यधनस्यार्द्धं लभते तदावश्यमर्द्धमुद्रैव तद्भवति; एवमुभयो: प्राप्यधनमेकीकृत्य सार्द्धैकमुद्रा भवति; अत्रैव द्व्यामुष्यायणदत्तकेनार्द्धमुद्रा लभ्यते, सा तु सार्द्धैकमुद्रायास्तृतीयांशरूपा; अतएवार्द्धहरत्वमित्यस्य तृतीयांशहरत्वमित्यर्थ: सुलभ एवेति सुधीभिर्विभावनीयम्। यादृशोऽंश: शास्त्रीय इति। चतुर्थांशादिरूप इत्यर्थः। तदर्द्धहरत्वञ्च, अष्टादंशहरत्वञ्च। औरसानुत्पत्तौ सर्वहरत्वे प्रमाणं दर्शयति यदाह प्रवराध्याय इति। एषां दातृप्रतिग्रहीतॄणाम्। द्वाभ्यां जनकग्रहीतृभ्याम्। रिक्थादर्द्धांशमिति। एतत्तु औरसपुत्रान्तरसत्त्वे तदसत्त्वे तु सर्वहरत्वमिति बोद्धव्यम्। तत्र जनककुले औरसगृहीतार्द्धहरत्वं ग्रहीतृकुलेऽसाधारणदत्तकगृहीतार्द्धहरत्वमिति॥ २९॥

अथान्धपङ्गुप्रभृतिपुत्राणां धनानधिकारितया तदौरसक्षेत्रजयोरेव पितामहधनभागित्वश्रुतेर्न तद्गृहीतदत्तकपुत्रादेः पितामहधनाधिकार: किन्तु भरणमात्रं, अन्धादिभार्य्याणां भरणविधानेन तद्भरणस्य दण्डापूपायितत्वात्॥ तथाहि, अन्धपङ्ग्वादीननधिकारि पुत्रानभिधाय औरसा: क्षेत्रजास्त्वेषां निर्द्दोषा भागहारिण:। अपुत्रा योषितश्चैषां भर्त्तव्या: साधुवृत्तय:। सुताश्चैषां प्रभर्त्तव्या यावन्न भर्तृसात्कृता इति। एवं ग्रहणानन्तरमुत्पन्नौरसेन सह दत्तकस्य विभागदर्शनात् सत्यौरसे गृहीतस्यापि नांशभागित्वमिति। तथा विधानं विना परिगृहीतस्यापि नांशभागित्वमित्याह॥ तस्मिन् जाते सुते दत्ते न कृते च विधानके। तत् स्वं तस्यैव वित्तस्य य: स्वामी पितुरञ्जसा॥ तथा मनु:॥ अविधाय विधानं य: परिगृह्णाति पुत्त्रकम्। विवाहविधिभाजं तं न कुर्य्याद्धनभाजनमिति।

[illegible]कस्यापि नांशभागित्वमित्याह यदि स्यादन्य-[illegible]तोऽपि सुतः क्वचित्। अंशभाजं न तं कुर्य्यात् शौन-[illegible] तत्। इत्युक्तप्रायमित्यास्तां विस्तरः।

[illegible]षा चन्द्रिकादत्तपद्धतेर्दर्शिका लघुः [illegible]
[illegible]रमा सन्निवेशैरङ्गिनां धर्म्मतारा[illegible] ॥ ४ ॥

इति [illegible]महोपाध्याय श्रीकुबेरकृता दत्तकचन्द्रिका
समाप्ता।

---

[illegible]तयेति ॥ अनंशौ क्लीवपतितौ नात्यन्धबधिरौ तथेत्यादिनेति शेषः ॥ [illegible]। एवकारादन्येषां गौणपुत्राणां व्यवच्छेदः। तईरणस्य तेषां दत्तकादीनां भरणस्येत्यर्थः ॥ दण्डापूपायितत्वादिति। एकत्र स्थापितयोर्दण्डापूपयोरपूपो [illegible]स्ति दण्डस्तु [illegible]न भक्षितस्तत्र मूषिकस्य दुष्करदण्डभक्षणासक्तौ यथा अपूपभक्षण-[illegible] तथाऽत्रापि अन्यादिभार्य्याणामधिकारासिद्धौ दत्तकादीनां तत्-[illegible] सुतरां सिद्ध एवेति बोध्यम्। एषामन्धपङ्ग्वादीनाम्। सत्यौरसे [illegible]स्याऽपि नांशभागित्वमिति। तथाचापुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदेत्यादिना सत्यौरसे पुत्रोपादानस्य शास्त्राननुमतत्वादिति भावः। अत्र प्रमाणं दर्शयति तस्मिन् जाते [illegible] तस्मिन् औरसे जाते सति सुते दत्ते तथा विधानकेन क्रीते च सुते [illegible] [illegible]न पितुर्वित्तस्य यः स्वामी तत्स्वं धनं तस्यैव पुत्रस्येत्यर्थः। [illegible]र्वोद्धृतप्रबन्धमनुना प्रमापयति अविधायेति। विधानमविधाय अकृत्वा ; तं विवा-[illegible]विभाजं कुर्य्यात् धनभाजनं न कुर्य्यात्। अन्यजातीयदत्तकस्यापीति। ब्राह्मणा-[illegible]भिः परिग्रहीतस्य क्षत्रियादिपुत्रस्येत्यर्थः। इत्यास्तां विस्तर इति ; अलमतिविस्तरेण [illegible]। दत्तपद्धतेर्दत्तकग्रहणरीतेर्दर्शिका ज्ञापिका पक्षे मार्गदर्शिका ॥ [illegible] [illegible] विरचिता, पक्षे स्निग्धकरतेजस्त्वाल्लघुः ; सन्निवेशैः सुरीत्यारचन-[illegible]मनोरमा मनोहारिणी ; पक्षे ज्योत्स्नायाः स्वतो मनोहारित्वं, अङ्गिनां देहिनां [illegible]: धर्म्मयोजिका ; चन्द्रिका कौमुदी, तदेषा चन्द्रिका दत्तकचन्द्रिका [illegible] शेषः। अत्र श्लिष्टोपमालङ्कारः। अत्रैतत् श्लोकस्य प्रथमतृतीयचरणयो-

राद्याचरद्वयं द्वितीयचतुर्थचरणयोरन्त्याचरद्वयञ्चावलम्ब्य एतद्ग्रन्थकर्त्तो प्रकटितं श्रूयते च पुरा किल कृष्णनगरराजगुरुणा रघुमणिना एत परन्तु अप्रामाण्यभिया स्वनामप्रकाशमकृत्वा एतद्ग्रन्थकर्त्तुः कुवेरना मिति ॥ ४० ॥

सप्तव्योमगजेन्द्रचन्द्रविमिते शाके रवौ कर्किगे
युग्मद्वन्द्वदिने दिवार्द्धसमये टीकागता पूर्णताम्।
या चेऽहं कृपया समस्तविवृतिं दृष्ट्वात्र यद्दूषणम्
प्राप्तव्यं तदिदं भवद्भिरखिलैरखार्थकैः शोध्यताम् ॥
खुल्नाजिलामध्यवर्त्तिवनग्रामातिसन्निधौ
संादिया नामकं ग्रामं विद्धि वासस्थलं मम ॥

इति श्रीललितमोहनकाव्यस्मृतितीर्थविरचिता दत्तकबोधिनी समाप्ता ॥

---



